॥ श्रीः ॥

# ॥ श्रीमत्सूतसंहिता ॥

## तात्पर्यदीपिकासहिता

# SÛTASAMHITÂ

WITH

TÂTPARYA DÎPIKA



PRINTED AND PUBLISHED BY

THE SRI BALAMANÔRAMA PRESS,

MYLAPORE, MADRAS.






Price Rs. 8-0-0 ] 1932 [ Postage Extra

ॐ

श्रीसांबाय परब्रह्मणे नमः

# ॥ श्रीमत्सूतसंहिता ॥

तात्पर्यदीपिकाख्यया व्याख्यया सहिता

## शिवमाहात्म्यखण्डप्रारंभः

ऐश्वरं परमं तत्वमादिमध्यान्तवर्जितम् ।
आधारं सर्वलोकानामनाधारमविक्रियम् ॥ १ ॥

---

श्रीमद्विद्यारण्यकृततात्पर्यदीपिकाख्यसूतसंहिताव्याख्याप्रारंभः—

प्रणमामि परं ब्रह्म यतो व्यावृत्तवृत्तयः ।
अविचारमहं वस्तु विपर्यीकुरुते धियः ॥

[नमःश्रीशंकरानन्दगुरुपादांबुजन्मने ।
सविलासमहामोहग्राहग्राहैककर्मणे ॥]

श्रीमत्काशीविलासाख्यक्रियाशक्तीशसेविना ।
श्रीमत्र्यंबकपादाब्जसेवानिष्णातचेतसा ॥

वेदशास्त्रप्रतिष्ठात्रा श्रीमन्माधवमन्त्रिणा ।
तात्पर्यदीपिका सूतसंहितायाः विधीयते ॥

क्रियते तत्तत्प्रकरणतात्पर्यप्रथनपूर्वकं विशदम् ।
विषमपदवाक्यविवरणं मन्दधियामनुग्रहाय भक्त्याच ॥

---

१. अविचारासहं पा-ग. २. कुर्वते पा-ग. ३. धिया पा-ग. ४. कुण्डलितोऽयंग्रंथः ख पुस्तक एव दृश्यते । ५. इहसूतप्रोक्तसंहितामध्ये पा-ख.

इहहि भगवान् बादरायणः लोकानुग्रहैकरसिकतया परशिवस्वरूपाविष्करणप्रधानां संहितामारभमाणः महतः पुरुषार्थस्य प्रत्यूहप्राचुर्यात्तन्निवृत्तये शिष्टाचारानुमितश्रुतिबोधितकर्तव्यताकं परशिवस्य प्रणिधानप्रणामलक्षणं मंगळं स्वकृतं शिष्यशिक्षार्थं ग्रंथादावुपनिबध्नाति—ऐश्वरमित्यादिश्लोकद्वयेन। द्विविधं हि पारमेश्वरं रूपं। निष्कळं सकळं चेति ('निष्कळस्सकळश्शंभुर्लिंगमूर्तिर्विराजत') इति सिद्धान्ते। तत्र निष्कळं शुद्धं। सकळं शंभुर्लिंगमूर्तिरूपं। स्वप्रकाशाखण्डसच्चिदानन्दैकरसमद्वितीयं स्वप्रतिपत्तिफलं तत्प्रणिधानं प्रथमार्धेन। निष्कळस्वरूपं बोधानन्दमयं प्रणिधेयत्वेनोक्तं—शैवागमे 'परैक्यप्रापकं ज्ञानं वच्मि सम्यग्घिताय वः। चिदानन्दमयं पूर्णं प्रत्यक्ब्रह्मात्मना स्थितं. ('परे व्योम्नि शिखान्तस्थः निष्कळः परमः शिवः। चिदानन्दघनस्सूक्ष्मस्सर्वभूतानुकंपया,)इति तथा सोमशंभुनापि—'जगन्मूलमकर्तारं बोधानन्दमयं विभुं। निष्कळं स्वप्रकाशं च संचिन्त्य परमं शिवमिति। वृत्तेस्साक्षितयावृत्तिप्रागभावस्य च स्थितः। बुभुत्सायास्तथाज्ञोस्मीत्यापातज्ञानवस्तुनः॥ असत्यालंबनत्वेन सत्यः सर्वजडस्य तु। साधकत्वेन चिद्रूपः सदा प्रेमास्पदत्वतः॥ आनन्दरूपस्सर्वार्थसाधकत्वेन हेतुना। सर्वसंबंधवत्वेन संपूर्णः शिवसंज्ञितः॥ जीवेशत्वादिरहितः केवलः स्वप्रभश्शिवः। इति शैवपुराणेषु कूटस्थः प्रविवेचितः, इति च। मोहशूलोत्तरेपि—('शिवं पूर्ववदावाह्य बोधानन्दघनामृतमिति')। स्वाधीनमायोपाधिस्वीकारेण जगन्निर्माणनियमनपरिपालनादिकर्तृ तत्वमैश्वरं। तदुक्तं मृगेन्द्रसंहितायां शिवं प्रस्तुत्य—'जगज्जन्मस्थितिध्वंसतिरोभावविमु-

१. श्रुत्यनगत पा-ख. २. मंगळाचरणं पा ग ३. स्वयकृतं पा-ग. ४. अयमपि ख. पुस्तकस्थः. ५. ख पुस्तकस्थः ६. सर्वत्र भर्वकर्तारं -ख. अयमपि ख. पुस्तकएव. ७. एते श्लोकाः पञ्चदश्यां कूटस्थदीपप्रकरणे [श्लो ५६-५९] ८. भास पा-ग. ९. प्रकृत्य. पा-ग १०. भावैककारणं। भूतभौतिक भावानां नियमश्चैतदेवहि पा-ग.

त्मय । कृत्वै सकारकफलं ज्ञेयमस्यैतदेवहीं) ति । तस्याद्विविधं रूपं । परमपरंच । लीलास्वीकृतयथादीरितोपाधिविशिष्टमपरं । निरस्तसमस्तोपाधिकं स्वप्रतिष्ठमखण्डसच्चिदानन्दैकरसमद्वितीयं परं । तत्रयत्परं तत्वं परमात्मभूतं त्रैकालिकबाधशून्यं । मिथ्याभूतपरिकल्पितस्वरूपमायातत्कार्यसंस्पर्शविरहात् । ननु मायाकार्येण कालेनावच्छेदादेव कथं न स्पर्श इति । तत्राह । आदिमध्यान्तवर्जितमिति । स्वप्रागभावावच्छिन्नो भूतकाल आदिः । स्वावच्छिन्नो वर्तमानकालो मध्यः । स्वप्रध्वंसावच्छिन्नो भविष्यत्कालोऽन्तः । एतत्त्रितयवर्जितं । कलातत्वसद्भावे हि कालतत्वं उक्तंहि—'पुंसो जगत्कर्तृतार्थं मायातस्तत्वपंचकं भवति । कालो नियतिश्च तथा भूतयदृच्छा स्वभावाश्च, इति । निष्कलदशायां कलासहभावी काल एव नास्ति । कुतो निष्कळपराशिवस्य तत्कृतपरिच्छेदशंकेत्यभिप्रायः । इत्थं निष्कळप्रणिधानं कृतं । सकलमपि द्विविधं । समस्तजगदात्मकं समस्तजगन्नियन्तृलीलावताररूपंचेति । अत एवहि रुद्राध्याये जगदात्मना जगन्नियंतृलीलावताररूपेण च नमस्कारः कृतः । तत्र जगदात्मना प्रणाममाह द्वितीयार्धेन । आधारमिति । यथैव हि सत्वमायोपाधिवशाज्जगन्नियन्तृत्वं निमित्तकारणं पारमेश्वरं तत्वं तमोपाधिवशाज्जगदात्मकतया तदुपादानत्वेन, एवं रजोगुणोपाधिवशात्तदाधारोपि । उक्तोहि जगन्नियन्तृत्वजगदात्मकत्वे परमेश्वरस्य । 'शिवो दाता शिवो भोक्ता शिवस्सर्वमिदं जगदिति, 'स्थितिसंयमकर्ता च जगतोऽस्य जगत्सचेति' । श्रूयते—'सोऽकामयत बहु स्यां प्रजायेयेति' । अत्रहि सोऽकामयतेति निमित्तत्वं । बहुस्यामित्युपादानत्वं तथा पाराशर्यं सूत्र-

१. तत्र ऐश्वरं रूपमपरमचलनयाद्युपाधिविशिष्टं । परमं निरस्तसमस्तोपाधिकं स्वप्रतिष्ठमखण्डसच्चिदानन्दैकरसमद्वितीयं तत्तत्वं । इति ग-पाठः. २. तदसंस्पर्श ग. ३. कलातत्वसहभावि ग. ४. कर्तृत्वार्थं ग. ५. कलाचविद्याचरागश्चेति ख. ६. तथाच ग. ७, इद ख. ८. कामिके अर्चनाविधिपटले श्लो. ५१४. ९. नै ब. व. अनु-६. १० पारमर्षं ग.

**अनन्तानन्दबोधांबुनिधिमद्भुताविक्रमम्।**
**अंबिकापतिमीशानमनिशं प्रणमाम्यहम् ॥ २ ॥**

मपि—'प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधादि, ति । यथैव सर्वलोकानामयमाधार एवमस्यापि कश्चिदन्य आधरस्स्यादितीमां शंकां निरस्यति अनाधारमिति स्वातिरिक्ताधाररहितः । 'स भगवः कस्मिन्प्रतिष्ठितः? स्वेमहिम्नीति' स्वमहिमप्रतिष्ठितत्वश्रुतेः । ननु जगदाधारश्चेदाधेयजगदात्मना धर्मेण उपायापायवता विकारित्वं तस्य स्यात् उपयन्ननपयन् धर्मो विकरोति हि धर्मिणमितिन्यायात्तत्राह अविक्रियमिति।कल्पितत्वेन जगतो न स्वाश्रयविकारहेतुता । नहि मरुमरीचिकाजलैर्मरुभूमिरार्द्रीक्रियत इत्यर्थः ॥ १ ॥

इदानीं जगन्नियन्तृलीलावताररूपेण प्रणिधानमाह अनन्तेति द्वितीयश्लोकेन ॥ अवतारोहि ध्यानपूजार्थं शिवेन स्वीक्रियते तदुक्तं सुप्रभेदे। यतीनां मन्त्रिणाञ्चैव ज्ञानिनां योगिनां तथा। ध्यानपूजानिमित्तं हि तनुं गृह्णाति मायया, इति अद्भुताः विक्रमास्त्रिपुरदहनादयो यस्य तं अंबिकायाः पतिः अम्बिकापतिं विजयपरिणयनादयः परमेश्वरस्य लीला दर्शिताः । तर्हि प्राकृतपुरुषवदेव रागद्वेषादिदोषसंभवात्संसार्येवासौ इति । नेत्याह । ईशानमिति । संसारिणो हि रागद्वेषादिवशीकृतत्वात्पुरुषान्तरपरतन्त्रत्वाच्च स्वयमनीशाना ईशवन्तश्च । शिवस्तु लीलयैव विजयपरिणयनादिव्यापारानाचरन्नपि रागद्वेषादिविरहो सर्वजगदीशिताच्च न पुरुषान्तरपरतंत्र इति न लौकिकसम इत्यर्थः । ननु लोकव-

१. ब्र. सू. अ. १ पा ४. सू. २३. २. आधार इतिश्रयं व्यदृश्यते ग. ३. छा. अ. ७ ख २४. मं १. ४. नियन्तृत्वे. ग ५. पूजार्थं ग. ६. सुप्रभेदंमहाशास्त्रं दशेशस्यप्रकीर्तितं। विघ्नेश्वरो दशेशाच्च शशी प्राप्तो गणेश्वरात्॥ कामिके तन्त्रावतारपटले श्लो०. ५०. ७. दोषपारतन्त्र्यात् ग. ८. तत्राह ईशानमनीशमिति ग. ९. अनीशितृत्वात् ग. १०, विरहेण. ख.

सत्रावसाने मुनयो विशुद्धहृदया भृशम्।
नैमिशीया महात्मानमागतं *रौमहर्षिणम् ॥ ३ ॥

देव शिवस्यापि सर्वे व्यवहाराश्श्रूयन्ते। अत एवैषां लीलारूपता कुत इत्यत आह अनन्तेति। अन्तः परिच्छेदः तद्रहितयोरानन्दबोधयोरंबुधिस्समुद्रः अतः तैत्कृत परिच्छेदविरहात्पारमेश्वरयो रानन्दज्ञानयोर्नलौकिकानन्दज्ञानवदुत्पत्तिविनाशवत्वं वस्तुकृतपरिच्छेदविरहाच्च तयोरखण्डैकरसत्वमितीशानः।अतिशायिनो वस्त्वन्तरस्याभावेन तस्य निरतिशयत्वं चेति कुतो लौकिकैसाधारण्यशंकावकाश इत्यर्थः। यद्यप्येवंबुनिधिरंन्तवान्सातिशयश्च तथापि लौकिकानां समुद्रेऽन्तवत्वसातिशयत्वविरहाभिमानात्तदभिमतदृष्टान्तेनैव परमेश्वरस्यात्यंतिकमानन्त्यं निरतिशयत्वं च दर्शयितुं अंबुनिधित्वेन रूपणं कृतमिति। ननु लौकिका अपि सर्वात्मकादीश्वरादभिन्ना एवेति कथं तदीयौ ज्ञानानन्दौ न तत्सदृशाविति। सत्यं। तत्सदृशौ। अज्ञानेनावृतत्वात्तु तत्सादृश्यं न ते जानन्ति। उक्तं हि। 'अज्ञानेनावृतं ज्ञानं तेन मुह्यन्ति जन्तवः, इति। अतस्तिरोहितज्ञानत्वाल्लौकिकानां व्यापारा दुःखमया एव न लीलाः। अनावरणपरमानन्दज्ञानत्वेन तु परमेश्वरस्य विजयपरिणयनादिव्यापारा लीला एवेत्यर्थः। नमामीति निष्कळपरशिवस्य तद्रूपतयाऽवस्थानमेव प्रणामः। सकळस्य तु ध्यानस्तुतिपूजात्मकः। तदुक्तं सुप्रभेदे। 'ध्यानपूजाविहीनं यन्निष्कळं तद्विधायकम्। तत्तस्मात्सकळं शंभुं निष्कळं संप्रपूजयेत्' इति ॥ २ ॥ ..................................इत्थं मंगळाचरणं कृतं। अथ मुनिसूतसंवादात्मना पुराणमारभ्यते—सत्रावसान इत्यादिना ॥ ननु व्यासेन सूताय प्रागेवोपदिष्टानि अष्टादशपुराणानि। अधुना पुनर्मुनयः

१. अंबुनिधिः ग. २. कालकृत ख. ३. कव्यवहारसाधारण ग. ४ स्याप्यनन्तत्वं ग. ५. निधिनारूपकं ग. ६. अज्ञानेनावृतोरामः साक्षान्नारायणोपिच। स्वस्वरूपंतुनाज्ञासीत् इति ग. ७. एवेत्यभिप्रायः ग. ८. अत्रनिष्क ग. ९. पूर्वोक्तं. १०. विधायकमपि ग. ११. रभते. ग. * रौमहर्षणं. ग.

शृण्वंति सूतो व्याचष्टे। व्यासस्तु कुरुते मंगळमिति चासंगतमुच्यते। व्यासस्सूताय पुराणानि प्रागुपदिष्टान्यपि तान्येव संप्रति मुनिसूतसंवादात्मना निबध्नातीति स्वयं क्रियमाणनिबंधनादौ स्वयमेव मंगळमाचरतीति किमनुपपन्नं। अथ सूताय स्वात्मनोपदेशं परित्यज्य व्यासेन मुनिसूतसंवादात्मना निबंधने किंप्रयोजनं। उच्यते। पुराणप्रतिपाद्यायाः तत्वविद्यायाः प्रभावातिशयाविष्करणं प्रयोजनं। तथाहि। इत्थं प्रभावेयं विद्या यत्सूतः प्राग्जन्मनः कनीयानपि व्यासात् पुराणमुखादेनामधिगम्य अग्रजानामपि मुनीनां स्वयमल्पोपि तत्वोपदेशकर्ता जात इति। तत्र सत्रावसाने विशुद्धहृदयाः प्रसन्नेन्द्रियमानसा इति पदत्रयेण मुनीनां परविद्योचिताधिकारसंपत्तिनिरूपणं। तथाहि। श्रुतिस्मृतीतिहासपुराणप्रतिपादितवेदानुवचनयज्ञतपोदानव्रतादिभिः प्रक्षीणसकलकल्मषस्य अतएव विशुद्धबुद्धेर्जनितजिज्ञासस्य परशिवस्वरूपविद्यायामधिकारः। अत ईदृग्विधो विद्याग्रहणाधिकारकारणगुणकलापस्तावदाविष्कर्तव्यः। तत्र सत्रावसानइत्यनेन श्रौतसकलधर्मानुष्ठाने विद्याप्रतिबंधकसकलपापापनयनरूपं विशुद्धहृदयत्वे कारणमुच्यते चतुर्विधा हि सोमयागाः। एकाहाहीनसत्रायनात्मकाः। एकैकदिनसाध्या अग्निष्टोमादय एकाहाः। अतिरात्रादयः एकादशादिर्नावसाना अहीनाः। द्वादशाहस्तु सत्राहीनोभयात्मकः। त्रयोदशरात्रादीनि सत्राणि। संवत्सरसाध्यान्ययनानि। अयनेष्वपि सत्रप्रयोगो दृश्यते॥ श्रु॥ 'गावोवा एतत्सत्रमासत विश्वसृजः प्रथमास्सत्रमासते.ति। तथा "नैमिशे निमिषक्षेत्रे ऋषयः शौनकादयः। सत्रंस्वर्गाय लोकाय सहस्रसममासतेति, तदिह नैमिशीयैः क्रियमाणस्यअनेकसंवत्सरसाध्यस्यायनस्यापि सत्रपदप्रयोगोपपत्तिः। 'सत्रं च परमो धर्म इत्यपरेषामपि महतां वेदानुवचनानां दानतपोव्रतादीनामप्युपलक्षणं। तेषामपि चित्तशुद्धिद्वारा विविदिषाकारणत्वं इष्य

१. प्राङ्महाक ग. २. शुद्धत्र ग. ३. विद्याग्रहणाधिकारगुणकलापः ख. ४ रात्रावसाना ख. ५. तै. सं० का. ७. प्र. ५. अ. १, ६. तै. काठ. प्र. ३. अ. ९. ७. श्री. भा. स्क. १. अ. १ श्लो. ४, ८. नामुपलक्षणं.

माणवेदनकारणत्वं च श्रूयते । 'तमेतं वेदानुवचनेन ब्राह्मणा विविदिषंति यज्ञेन दानेन तपसाऽनाशकेनेति,॥ तथा पाशुपतव्रतस्यापि परशिवसाक्षात्कारकरणत्वमथर्वशिरसि दृश्यते । 'अग्निरित्यादिना भस्मगृहीत्वा निमृज्यांगानि संस्पृशेत् तस्माद्व्रतमेतत्पाशुपतं पशुपाशविमोक्षाय, इति । उक्तस्य सत्रपदोपलक्षितस्य कर्मराशेः बुद्धिशुद्धौ कारणभावमाह । विशुद्धहृदया इति। हृदयं बुद्धिस्तस्य विशुद्धिर्नाम संचितदुरितापनयनेन तन्निबंधनस्य दुःखस्य निरासः । नैमिशीया इति। ब्रह्मणाविसृष्टस्य चक्रस्य नेमिश्शीर्यते कुंठीभवति यत्र तन्नेमिशं । नेमिशमेव नैमिशं । तथोक्तं वायवीये । 'एतन्मनोमयं चक्रं मया सृष्टं विसृज्यते । यत्रास्य शीर्यते नेमिर्नैमिशं तच्छुभावहं ॥ इत्युक्त्वा सूर्यसंकाशं चक्रं सृष्ट्वा मनोमयं । प्रणिपत्य महादेवं विससर्ज पितामहः । तेपि हृष्टतरा विप्राः प्रणम्य जगतां पतिं । प्रययुस्तस्य चक्रस्य यत्र नेमिर्विशीर्यते । तद्वनं तेन विख्यातं नैमिशं मुनिपूजित' मिति ॥ नैमिशमेषां निवास इति नैमिशीयाः । तथा प्रसन्नेन्द्रियमानसा इति । मनसः प्रसादो नाम रजस्तमोभ्यामनभिभवादावरणविक्षेपविरहेण तत्वप्रणिधाने ऐकाग्र्यं । इन्द्रियाणां प्रसादो नाम प्रसन्नता मनःप्रातिकूल्यपरिहारेण प्रत्युत तदानुकूल्येनैव वर्तनं श्रूयतेहि—' यस्त्वविज्ञानवान्भवत्यमनस्कस्सदाऽशुचिः । तस्येन्द्रियाण्यवश्यानि दुष्टाश्वा इव सारथेः ॥ 'यस्तुविज्ञानवान्भवति समनस्कस्सदा शुचिः। तस्येन्द्रियाणि वश्यानि सदश्वा इव सारथे' रिति । पतंजलिरप्याह । ' स्वविषयासंप्रयोगे चित्तस्वरूपानुकार इवेन्द्रियाणां प्रत्याहार, इति । इत्थमिहजन्मनि जन्मान्तरेवा विहितैर्व्रतदानादिभिः सञ्चितदुरितनिरसनेन रजस्तमोभ्यामनभिभवाद्विशुद्धसत्वास्तत्वजिज्ञासवो विद्याग्रहणाधिकारिणो दर्शिताः । विद्योपदेशे तु सूतस्याधिकारितामाह

१. बृ. आ. अ. ४, ब्रा. ४. म०, २२. अथ. म०. ३'९. २. क०. व, ३. म० ५. ४. क व, ३. मं ८. ५. यो. सू. सा. पा. सू. ५४. ६. निरासद्वारा. ग. ७. अनभिभूतहृदया. ग.

दृष्ट्वा यथार्हं संपूज्य प्रसन्नेन्द्रियमानसाः ।
पप्रच्छुस्संहितामेतां* सूतं पौराणिकोत्तमम् ॥ ४ ॥
एवं पृष्टो मुनिश्रेष्ठैस्सूतस्सर्वार्थदायिनम् ।
महादेवं महात्मानं ध्यात्वा व्यासं च भक्तितः॥ ५ ॥
समाहितमना भूत्वा विलोक्य मुनिसत्तमान् ।
वक्तुमारभते सूतस्संहितां श्रुति§सम्मिताम् ॥ ६ ॥

---

महात्मानमागतमिति । उभयं हि तत्रापेक्षितं । अनुग्रहसामर्थ्यमनुग्रहशीलत्वंचेति। तत्र महात्मानमिति [१]व्यासप्रसादासादितपरशिवसाक्षात्कारनिबन्धनमनुग्रहसामर्थ्यमुक्तं। आगतमिति विशिष्टाधिकारिलाभात्तदुद्धरणार्थमनाहूतस्यापि स्वयमेवागम[२]नाभिधानेन परमकारुणिकत्वादनुग्रहशीलत्वमुक्तं । यथा [३]जनकं प्रति याज्ञवल्क्यस्येति ॥ ३ ॥ अथ विद्याग्रहणाधिकारसंपन्ना मुनय उपदेशोचितगुरुलाभनिबंधनया प्रीत्या तं परिपूज्य स्वजिज्ञासामाविष्कृतवन्त इत्याह । पप्रच्छुरिति । उक्तंहि । [४]तद्विद्धि प्रणिपातेन परिप्रश्नेन सेवया । उपदेक्ष्यन्ति ते ज्ञानं ज्ञानिनस्तत्वदर्शिन इति ॥ ४ ॥ एवं मुनिभिः पृष्टो मुनीनां पुराणसंहिताश्रवणे मुख्याधिकारसिद्ध्यै परशिवप्रणिधानपुरस्सरां[५] शिष्यावलोकनरूपां चाक्षुषीं दीक्षामकार्षीदित्याह । एवं पृष्ट इत्यादिना । उक्ता ह्यागमेषु चाक्षुषी दीक्षा । 'चक्षुरुन्मील्य यत्तत्वं ध्यात्वा शिष्यं समीक्षते । पशुबंधविमोक्षाय दीक्षेयं चाक्षुषी मते'ति । '[६]यस्य देवे परा भक्तिर्यथा देवे तथा गुरौ । तस्यैते कथिता ह्यर्थाः प्रकाशन्ते महात्मन इति ' श्वेताश्वतरश्रुतेः । पराशिवप्रणिधानवद्गुरुप्रणिधानमपि विधेयमित्याह—व्यासं चेति ॥५॥ श्रुतिस

---

* पुण्यां ख. ‡ कंमुदा. ग. § सम्मतां. ख.

१. महत्तपःप्रकर्षाद्वा. ख. महादेवप्र. ग. २. मना भिधानात्. ग. ३. विशेषतो जनकयाज्ञवल्क्यसंवादः बृहदारण्यकेचतुर्थाध्यायप्रारंभे. ४. भग. अ. ४. श्लो. ३४. ५. पुरस्सरावलोकन. ख. ६. श्वे. अ ६, मं. २३.

श्रीसूतः—

ब्राह्मं पुराणं प्रथमं द्वितीयं पाद्ममुच्यते ।
तृतीयं वैष्णवं प्रोक्तं चतुर्थं शैवमुच्यते ॥ ७ ॥
ततो भागवतं प्रोक्तं भविष्याख्यं ततः परम् ।
सप्तमं नारदीयं च मार्कण्डेयं तथाष्टमम् ॥ ८ ॥
आग्नेयं नवमं पश्चाद्ब्रह्मकैवर्तमेवच ।
ततो लैंगं च वाराहं ततस्कान्दमनुत्तमम् ॥ ९ ॥
वामनाख्यं ततः कौर्मं मात्स्यं तत्परमुच्यते ।
गारुडाख्यं ततः प्रोक्तं ब्रह्माण्डं तत्परं विदुः ॥ १० ॥
ग्रन्थतश्च चतुर्लक्षं पुराणं मुनिपुंगवाः।
अष्टादशपुराणानां कर्ता सत्यवतीसुतः ॥
कामिकादिप्रभेदानां यथा देवो महेश्वरः ॥ ११ ॥

म्मितामिति सकलश्रुत्यर्थसंग्रहात्मिकामित्यर्थः ॥ ६ ॥ विवक्षिताया अस्यास्संहितायाः व्यासमुखादागतत्वेन प्रामाण्यं स्थापयितुं नानामुनिप्रणीतसकलोपपुराणमूलभूतानामष्टादशानां पुराणानां वेदशाखाविभागस्य च प्रणयनेन व्यासस्य सर्वज्ञत्वं अतएव तस्य परमपुरुषावतारत्वं च प्रतिपादयितुमष्टादशपुराणानां नामान्यनुक्रामति—ब्राह्ममित्यादिना सार्धचतुष्टयेन । ब्रह्मसंबंधि ब्राह्मं तस्येदमित्याणि नस्तद्धित इति टिलोपस्य अन्निति प्रकृतिभावेन निरासेपि ब्राह्मोऽजाताविति निपातनाट्टिलोपः ॥ १० ॥ ग्रंथतश्च चतुर्लक्षमिति—संख्याभिधानं प्रक्षेपविप्लवपरिहाराय ११ ॥ कामिकादीनामागमसंहितानां

१. ततः परं०. ख. २. वैवर्तं. ग. ३. वराहंच. ग. ४. स्थापयितुं. ग. ५. प्रगीत. ग. ६. माहेश्वरावतारत्व०. ग. ७. णान्यनुक्रामति. ग.

[1][आदिकर्ता शिवस्साक्षाच्छूलपाणिरितिश्रुतिः ।
कथ्यते दशभिर्विप्राः पुराणैः परमेश्वरः ॥
चतुर्भिः कथ्यते विष्णुर्द्वाभ्यां ब्रह्मा जगत्पतिः ।
एकेनाग्निस्तथैकेन भगवान् चण्डभास्करः] ॥
अष्टादशपुराणानि श्रुत्वा सत्यवतीसुतात् ।
अन्यान्युपपुराणानि मुनिभिः कीर्तितानि तु ॥ १२ ॥
आद्यं सनत्कुमारेण प्रोक्तं वेदविदां वराः ।
द्वितीयं नारसिंहाख्यं तृतीयं नान्दिकेश्वरम्[2] ॥ १३ ॥
चतुर्थं शिवधर्माख्यं दौर्वासं पंचमं विदुः ।
षष्ठं तु नारदीयाख्यं कापिलं सप्तमं विदुः ॥ १४ ॥
अष्टमं मानवं[3] प्रोक्तं ततश्चोशनसेरितम् ।
ततो ब्रह्माण्डसंज्ञन्तु वारुणाख्यं ततः परम् ॥ १५ ॥
ततः कालीपुराणाख्यं विशिष्टं मुनिपुङ्गवाः ।

---

शिवेनैव प्रणयनात्प्रामाण्ये यथा विस्रंभः एवं नारायणावतारेण[4] व्यासेन प्रणयनात्पुराणेष्वप्यविशेष इत्याह—अष्टादशपुराणानामिति । व्याख्यातप्रायोऽयं ॥ १२ ॥ नानामुनिप्रणीतानामुपपुराणानामप्येतन्मूलत्वादेतेषां प्रणेतुर्व्यासस्य सर्वज्ञत्वं[5] किं वक्तव्यमित्याह—अष्टादश पुराणानि श्रुत्वेति ॥ १३ ॥ उपपुराणान्यप्यष्टादशानुक्रामति—आद्यं सनत्कुमारेण प्रोक्तमित्या-

१. कुण्डलितौ श्लोकौ ख. पुस्तकस्थौ. २. नान्दमेनच ग. ३. वामनं ख.
४. परमपुरुषावतारेण ख. ५. सार्वज्ञ्यं ख.

ततो वासिष्ठलैंगाख्यं प्रोक्तं[1] माहेश्वरं परम् ॥ १६ ॥
ततस्साम्बपुराणाख्यं ततस्सौरमनुत्तमम्[2] ।
पाराशर्यं[3] ततः प्रोक्तं मारीचाख्यं ततः परम्॥
गर्गाख्यं[4] च ततः प्रोक्तं सर्वधर्मार्थसाधनम् ॥ १८ ॥
लक्षन्तु ग्रन्थसंख्याभिः सर्वविज्ञानसागरम् ।
स्कान्दमद्याभिवक्ष्यामि[5] पुराणं श्रुतिसम्मितम् ॥ १९ ॥
षड्विधं संहिताभेदैः पंचाशत्खण्डमण्डितम् ॥ १९ ॥
आद्या सनत्कुमारोक्ता द्वितीया सूतसंहिता ।
तृतीया शांकरी प्रोक्ता[6] चतुर्थी वैष्णवी मता॥
तत्परा संहिता ब्राह्मी सौरान्त्या[7] संहिता मता ॥२१॥
ग्रन्थतः पंचपंचाशत्सहस्रेणाभिनिर्मिता ।
आद्या तु संहिता प्रोक्ता द्वितीया षट्सहस्रिका॥२२॥
तृतीया ग्रन्थतस्त्रिंशत्सहस्रेणोपलक्षिता ।

---

दिश्लोकषट्केण ॥ १६—१८ ॥ अथेदानीं विवक्षितां सूतसंहितामवतारयितुमनुक्रान्तानां पुराणानां मध्ये त्रयोदशस्य स्कान्दपुराणस्य संहितादिविभागमाह सार्धपञ्चकेन। स्कान्दमद्याभिवक्ष्यामीत्यादिना॥१९–२०॥ सौरान्त्येति सूरसंबन्धि सौरं तदस्या अस्ति सौरा अर्शआदिभ्योऽजिति अजन्तान्मत्वर्थीयाट्टाप्। सूरस्येयं संहितेतिव्युत्पत्तौ तस्येदमित्यणन्तान्ङीपा भावितव्यामिति॥ २१ ॥

---

१. साक्षात्. ख. २. महाद्भुतं ग. ३. पाराशरं ग ४. भार्गवाख्यं ग. ५. विभज्यामि ख. ६. त्रिप्राः ग. ७. रान्या.

तुरीया संहिता पंचसहस्रेण विनिर्मिता ॥ २३ ॥
ततोऽन्या त्रिसहस्रेण ग्रन्थेनैव विनिर्मिता।
अन्या सहस्रतस्सृष्टा ग्रन्थतः पण्डितोत्तमाः ॥ २४ ॥
द्वितीयां संहितां वक्ष्ये सर्वपापप्रणाशिनीम् ।
मुनिभिर्देवगन्धर्वैः पूजितामतिशोभनाम् ॥ २५ ॥
चतुर्धा खण्डिता सापि पवित्रा वेदसंमिता।
शिवमाहात्म्यखण्डाख्यः प्रथमः परिकीर्तितः ॥ २६ ॥
द्वितीयो ज्ञानयोगाख्यस्सर्ववेदान्तसंग्रहः ।
तृतीयो मुक्तिखण्डाख्यश्चतुर्थो यज्ञवैभवः ॥ २७ ॥
आद्यस्सप्तशतं प्रोक्तो ग्रन्थतः पण्डितोत्तमाः ।
द्वितीयो ग्रन्थतस्सप्तशतं त्रिंशत्ततोऽधिकं।

---

२४ ॥ इति सिद्धं विभागमभिधाय विवक्षितां संहितां वक्तुं प्रतिजानीते । द्वितीयां संहितां वक्ष्य इति ॥ २५ ॥ यद्यपि खण्डान्तरेष्वपि शिवमाहात्म्यमुच्यते तथापि प्रथमस्य तत्प्राधान्यात्तेन व्यपदेशः ॥ २६ ॥ द्वितीय इति । द्वितीये ज्ञानस्य योगा उपाया यमनियमादयो ज्ञानयोगा आख्यायन्तेऽस्मिन्नित्याख्यः । आतश्चोपसर्ग इति कप्रत्ययः । ज्ञानयोगानामाख्य इति संबंधसामान्यषष्ठीसमासः सा तु प्रकृते संबंधविशेषे कर्मत्वे योग्यताबलात् पर्यवस्यति । न च कर्मणि षष्ठीसमासः किं नस्यादिति वक्तव्यं । कर्मण्याणित्यनेन परेण बाधापातादिति । यज्ञवैभवखण्डे तु ज्ञानयज्ञविशेषा वक्ष्यन्ते । ते सर्वे ज्ञानात्मका एव यज्ञाः । इहतु तदुपाया यमनियमादय इत्यसंकरः । यज्ञवैभव इति । यज्ञानां वैभवं प्रभावोऽस्मिन्निति यज्ञवैभवः ॥ २७ ॥ आद्य इति सार्धश्लोकं एकं-

ततोऽधिकञ्च सप्तैव मुनयः परीकीर्तितः ॥ २८ ॥
तृतीयः षट्शतं विप्राः सप्तत्रिंशाद्विवर्जितः ।
चतुर्थस्तु मुनिश्रेष्ठास्सहस्राणां चतुष्टयं ॥ २९ ॥
उपर्यधोभागभेदाद्द्विधाभूतस्स उच्यते ॥ ३० ॥
आद्यस्त्रयोदशाध्यायो द्वितीयो विंशतिस्तथा।
तृतीयो नव विप्रेन्द्राश्चतुर्थस्तु तथैवच ॥
सप्तषष्टिस्समस्तानां वेदानामर्थ आस्तिकाः ॥ ३१ ॥

---

वाक्यं । सप्तानां शतानां समाहारस्सप्तशतमिति समाहारे द्विगुः । अकारान्तत्वेन प्राप्तं स्त्रीत्वं पात्रादिभ्यः प्रतिषेध इत्यनेन निषिध्यते। नन्वेकोयं खण्डः कथं सप्तशतसमाहारात्मकः अत उक्तं ग्रन्थत इति । ग्रन्थद्वारा स्वावयवभूतानां ग्रन्थानां संसंशंतसमाहारात्मकत्वात्तदभेदेन स्वयमपि सप्तशतमित्यर्थः । ततोऽधिकमिति अधिकञ्च किञ्चिदस्तीति सामान्येनोपक्रम्य कियत्तदिति जिज्ञासायां त्रिंशादिति । 'शक्यमञ्जलिभिः पातुं वाताः कैतकगंधिन' इति वत् ॥ २८ ॥ २९ ॥ तृतीय इति सार्धश्लोकं एकं वाक्यं । चतुर्थ इति । चतुर्थखण्ड उपरिभागः अधोभाग इति भागभेदेन द्विप्रकारः ॥ ३० ॥ प्रकृतसंहितागतखण्डचतुष्टयस्याध्यायविभागमाह आद्यस्त्रयोदशाध्याय इति सार्धश्लोकेन। आद्यः खण्ड अध्यायैस्त्रयोदश ग्रंथतः सप्तशतमितिवत् । ननु त्रयोदशाभिरध्यायैरिति दिक्संख्ये संज्ञायामिति नियमात् इहच द्विगुसमासनिमित्तानां संज्ञादीनामभावात् आद्यस्त्रयोदशाध्याय इति पाठश्श्रेयान् । तत्रहि न त्रयोदशेति प्रथकपदं ॥३१॥ तत्र। प्रथमे खण्डे प्रथमाध्याये ग्रन्थावतारः।द्वितीये पाशुपतव्रतं । तृतीये नन्दीश्वरविष्णुसंवादेनेश्वरप्रतिपादनं । चतुर्थे परमेश्वरपूजाविधानन्देवपूजाफलंच । पंचमे शक्तिपूजाविधिः । षष्ठे शिवभक्तपूजा । सप्तमे

[एवं चतुर्विधैः खण्डैस्संहिता वेदसम्मिता] ।

मुक्तिसाधनं । अष्टमे कालपरिमाणतदनवच्छिन्नस्वरूपकथनं । नवमे पृथिव्युद्धरणं। दशमे ब्रह्मणा सृष्टिकथनं। एकादशे हिरण्यगर्भादिविशेषसृष्टिः। द्वादशे जातिनिर्णयः । त्रयोदशे तीर्थमाहात्म्यं ॥ द्वितीयखण्डे विंशतिरध्यायाः ॥ तत्र प्रथमाध्याये ज्ञानयोगसंप्रदायपरंपरा । द्वितीये आत्मना सृष्टिः । तृतीये ब्रह्मचर्याश्रमविधिः । चतुर्थे गृहस्थाश्रमविधिः । पञ्चमे वानप्रस्थाश्रमविधिः । षष्ठे सन्यासविधिः । सप्तमे प्रायश्चित्तं । अष्टमे दानधर्मफलं । नवमे पापकर्मफलं। दशमेपिण्डोत्पत्तिः। एकादशे नाडीचक्रं। द्वादशे नाडीशुद्धिः। त्रयोदशे अष्टाङ्गयोगे यमविधिः । चतुर्दशे नियमविधिः । पञ्चदशे आसनविधानं । षोडशे प्राणायामविधिः । सप्तदशे प्रत्याहारविधिः । अष्टादशे धारणाविधिः । एकोनविंशे ध्यानविधिः । विंशे समाधिः ॥ तृतीये मुक्तिखण्डे नवाध्यायाः ॥ तत्र प्रथमे मुक्तिमुक्त्युपायमोचकमोचकप्रदचतुर्विधप्रश्नाः । द्वितीये मुक्तिभेदकथनं। तृतीये मुक्त्युपायकथनं। चतुर्थे मोचककथनं । पंचमे मोचकप्रदकथनं। षष्ठे ज्ञानोत्पत्तिकथनं । सप्तमे गुरूपसदनशुश्रूषणमहिमा । अष्टमे व्याघ्रपुरे देवानामुपदेशः । नवमे ईश्वरनृत्तदर्शनं ॥ चतुर्थखण्डे सप्तपष्टिरध्यायाः ॥ तत्र पूर्वभागे सप्तचत्वारिंशत् । तत्र प्रथमाध्याये सर्ववेदार्थसारप्रश्नः॥ द्वितीये परापरवेदार्थविचारः । तृतीये कर्मयज्ञवैभवं । चतुर्थे वाचिकयज्ञः । पंचमे प्रणवविचारः । षष्टे गायत्रीप्रपंचः । सप्तमे आत्ममन्त्रः । अष्टमे षडक्षरविचारः। नवमे ध्यानयज्ञः । दशमे ज्ञानयज्ञः। एकादशादिपञ्चस्वध्यायेषु ज्ञानयज्ञविशेषाः। षोडशे ज्ञानोत्पत्तिकारणं । सप्तदशे वैराग्यविचारः । अष्टादशे नित्यानित्यवस्तुविचारः। एकोनविंशे नित्यवस्तुविचारः। विंशे विशिष्टधर्मविचारः। एकविंशे मुक्तिसाधनविचारः। द्वाविंशे मार्गप्रमाण्यधर्मविचारः । त्रयोविंशे शंकरप्रसादः । चतुर्विंशपञ्चविंशयोः प्रसादवैभवं । षड्विंशे शिवभक्तिविचारः । सप्तविंशे परमपदस्वरूपविचारः। अष्टाविंशे शिवलिङ्गस्वरूपकथनं । एकोनत्रिंशे शिवस्था-

अस्यामेव स्थितस्साक्षात्संहितायां न संशयः॥ ३२ ॥
सर्गश्च प्रतिसर्गश्च वंशो[1] मन्वन्तराणि च।
वंशानुचरितं चैवं[2] पुराणं पञ्चलक्षणम् ॥ ३३ ॥
यश्चतुर्वेदविद्विप्रः पुराणं वेत्ति नार्थतः।
तं दृष्ट्वा भयमाप्नोति वेदो मां प्रतरिष्यति ॥

नविचारः। त्रिंशे भस्मधारणवैभवं। एकत्रिंशे शिवप्रीतिकरं जीवब्रह्मैक्यविज्ञानं। द्वात्रिंशे भक्त्यभावकारणं। त्रयस्त्रिंशे परतत्वानां विचारः। चतुस्त्रिंशे महादेवप्रसादकारणं। पञ्चत्रिंशे संप्रदायपरंपरा। षट्त्रिंशे सद्योमुक्तिकरक्षेत्रमहिमा। सप्तत्रिंशे मुक्त्युपायविचारः। अष्टत्रिंशे मुक्तिसाधनविचारः। एकोनचत्वारिंशे वेदानामविरोधः॥ चत्वारिंशे सर्वसिद्धिकर[3]धर्मविचारः। एकचत्वारिंशे पातकविचारः। द्विचत्वारिंशे प्रायश्चित्तविचारः। त्रिचत्वारिंशे पापशुद्ध्युपायाः[4]। चतुश्चत्वारिंशे द्रव्यशुद्धिविचारः। पञ्चचत्वारिंशेऽभक्ष्यनिवृत्तिः। षट्चत्वारिंशे मृत्युसूचकम्। सप्तचत्वारिंशेऽवशिष्टपापस्वरूपकथनम्॥ चतुर्थखण्डस्योत्तरभागे विंशतिरध्यायाः॥ तत्र प्रथमे ब्रह्मगीतिः। द्वितीये वेदार्थविचारः। तृतीये साक्षिशिवस्वरूपकथनम्। चतुर्थे साक्ष्यस्तित्वकथनम्। पञ्चमे आदेशकथनम्। षष्ठे दहरोपासनम्। सप्तमे वस्तुस्वरूपविचारः। अष्टमे तत्त्ववेदनविधिः। नवमे आनन्दस्वरूपकथनम्। दशमे आत्मनो ब्रह्मतत्त्वप्रतिपादनम्। एकादशे ब्रह्मणः सर्वशरीरस्थितिः। द्वादशे शिवस्याहंप्रत्ययाश्रयत्वम्। त्रयोदशे सूतगीतिः। चतुर्दशे आत्मना सृष्टिः। पञ्चदशे सामान्यसृष्टिः। षोडशे विशेषसृष्टिः। सप्तदशे आत्मस्वरूपकथनम्। अष्टादशे सर्वशास्त्रार्थसंग्रहः। एकोनविंशे रहस्यविचारः। विंशे

१. वंश-ख. २. चेति-ख. ३. कर्म-ख, ४. उपायः-ख. ५. उपायः-ख. ६. गीता-ख ७. ब्रह्मत्व-ग. ८ सूतगीता-ख.

[[1]बिभेत्यल्पश्रुताद्वेदो मामयं विप्लविष्यति]॥
इतिहासपुराणाभ्यां वेदं समुपबृंहयेत् ॥ ३४ ॥
वेदाः प्रमाणं प्रथमं स्वत एव ततः परम् ॥
स्मृतयश्च पुराणाणि भारतं मुनिपुङ्गवाः ॥ ३५ ॥
अन्यान्यपि मुनिश्रेष्ठाः शास्त्राणि सुबहूनि च ॥

---

सर्ववेदान्तसंग्रहः । इति सामान्येनाध्यायार्थाः कथिताः । सकलश्रुत्यर्थसंग्रहात्मकत्वादस्यां संहितायामवश्यमादरो विधेय इत्याह समस्तानामिति श्लोकशेषेण ॥ ३२ ॥ नानाविधोपाख्यानप्रतिपादनपर्यवसिते पुराणे कः प्रसङ्गो वेदार्थस्य तत्राऽऽह—सर्गश्चेत्येकेन । ब्रह्मणस्तटस्थलक्षणत्वेन सृष्टिस्थितिप्रलया एव वेदे प्रधानं प्रमेयम् । "आत्मैवेदमग्र आसीत्" "स ऐक्षत" इति महासर्गः । "नेह नानाऽस्ति" इति महाप्रलयः । अन्यत्सर्वं स्थित्यवस्थाविलासः । इत्थमेवं पुराणेऽपि वंशमन्वन्तरवंशानुचरितानि स्थित्यवस्थात एवेति ॥ ३३ ॥ वेदार्थ एव चेत्पुराणे स वेदेनैव सिद्धः किं पुराणेनेति तत्राऽऽह । यश्चतुर्वेदविद्विप्र इति सार्धश्लोकेन । तत्र स्थितस्याप्यर्थस्य तावतैव दुरधिगमत्वात्तदुपबृंहणाय पुराणमित्यर्थः । अनुपबृंहणे बाधमाह—तं दृष्ट्वेति । विप्लवस्य दुष्परिहरत्वं दर्शयितुं वेदे भयारोपः । प्रतरिष्यति विप्लावयिष्यतीति बिभेति । अतस्तं समुपबृंहयेदित्यन्वयः ॥ ३४ ॥ सर्वथा पुराणादिकमवेक्षितं चेत्तेनैव पर्याप्तम् । किं वेदैः इति चेत् न । वेदानां स्वतः प्रामाण्यात्तन्मूलतयैव पुराणादेः स्वरूपलाभादित्याह—वेदाः प्रमाणं प्रथममिति श्लोकद्वयेन ॥ अन्यान्यपि । आर्षस्मृतिपुराणमूलानि । तदर्थसंग्रहशास्त्राणीत्यर्थः ॥ ३५ ॥ वेदाविरोधेन । 'विरोधे त्वनुपेक्षं

१. कुण्डलितमधिकतया-ख. पुस्तके दृश्यते. २. वस्थायामे-ख. ३. बाधक-ख.

सर्वं वेदाविरोधेन प्रमाणं नान्यवर्त्मना ॥ ३६ ॥
एक एव द्विजा वेदो वेदार्थश्चैक एव तु ॥
तथाऽपि मुनिशार्दूलाः शाखाभेदेन भेदितः ॥ ३७ ॥
अनन्ता वै द्विजा वेदा वेदार्थोऽपि द्विजोत्तमाः ॥
अनन्तो वेदवेद्यस्य शङ्करस्य शिवस्य तु ।

*'स्यादसति ह्यनुमानम्' इति हि जैमिनीयं सूत्रम् । मूलभूतवेदानुमानेन स्मृत्यादेः प्रामाण्यं तद्विरोधे त्वनुमानमेव नोदेतीति मूलाभावादुपेक्षणीयम् । अथवा यावन्मूलोपलम्भं प्रत्यक्षश्रुतिविरुद्धस्मृत्याद्यर्थो नानुष्ठेय इति सूत्रार्थः । वेदाविरोधेन चेत्प्रामाण्यं तर्हि ऋग्वेदेऽनुदितहोमं निन्दित्वोदितहोमो विधीयते "प्रातः प्रातरनृतं ते वदन्ति पुरोदयाज्जुह्वति येऽग्निहोत्रम् । दिवाकीर्त्यमदिवा कीर्तयन्तः सूर्यो ज्योतिर्न तदा ज्योतिरेषाम्" इति ॥ यजुर्वेदे तूदितहोमनिन्दयाऽनुदितहोमो विधीयते "यथाऽतिथये प्रद्रुताय शून्यायावसथायाऽऽहार्यं हरन्ति तादृगेवतद्यदुदिते जुहोति" इति । अतः परस्परविरोधाद्वेदद्वयमप्रमाणं स्यादित्यत्राह । एक एव द्विजा वेद इति । सर्वोऽयमेक एव वेदस्तत्कुतः परस्परविरोधः । नचैवं स्ववचनव्याघातः । षोडशिग्रहणाग्रहणवचनवद्विकल्पाभिप्रायत्वादित्यर्थः ॥ ३७ ॥ कथं तर्हि भेद-व्यवहारः—'अङ्गानि वेदाश्चत्वारो मीमांसा न्यायविस्तरः । पुराणं धर्मशास्त्रं-च विद्याह्येताश्चतुर्दश' इति स्मृतिः । 'वेदा वा एते अनन्ता वै वेदा' इति च श्रुतिरित्यत आह । तथाऽपीति । एकस्याप्यपरिमितस्य वेदस्य केनचिदप्ये-केन पुरुषेणाध्येतुं तदर्थस्य चानुष्ठातुमशक्यत्वादेकं वेदमृग्यजुःसामाथर्वभेदेन चतुर्धा विभज्य तत्रैकैकः पुनरैतरेयादिशाखाभेदेन भेदित इत्यर्थः ॥ ३८ ॥

*जै. १-३-३. १. तादृक्तत् ग. २. द्व्याप्रामाण्यं ख. ३. अयंश्लोकः मनु-रिति संजीविनी ।

मायया न स्वरूपेण द्विजा हा देववैभवम् ॥ ३९ ॥
ब्रह्माणं मुनयः पूर्वं सृष्ट्वा तस्मै महेश्वरः ।
दत्तवानखिलान्वेदानात्मन्येव स्थितानिमान् ॥ ४० ॥
ब्रह्मा सर्वजगत्कर्ता शिवस्य परमात्मनः ।
प्रसादादेव रुद्रस्य स्मृतीः सस्मार सुव्रताः ॥ ४१ ॥

ननु वेदशाखा एव चेदसंख्याताः कथं तर्हि 'एक एव रुद्रो न द्वितीयाय तस्थे' इति तैत्तिरीयकश्रुतिः । 'अहमेकः प्रथममासं वर्तामि च भविष्यामि च । नान्यः कश्चिन्मत्तो व्यतिरिक्त' इत्यथर्वशिरसि वचनमित्यत आह । वेदवेद्यस्येति । मायया न स्वरूपेणेति । परमार्थतो ह्यद्वितीयो रुद्र इत्युक्तम् । अतस्तेनैव लीलया निर्मितस्य मायामयस्य न वास्तवेन तदद्वैतेन विरोध इत्यर्थः । नन्वेतादृशी लीला क्वचिदपि लोके न दृष्टचरीत्यत आह । द्विजा हा देववैभवमिति । "अह हेत्यद्भुते खेदे" इत्यभिधानम् । अन्यत्रादृष्टत्वमद्भुतस्यालंकारो न दूषणमित्यर्थः ॥ ३९ ॥ नन्वपौरुषेया वेदाः 'वाचाविरूपनित्यया' 'अनादिनिधना नित्या वागुत्सृष्टा स्वयंभुवा' इति । श्रुतिस्मृती इति । ते कथं निर्मिताः कश्चैता एतावतीर्ग्रहीष्यति यस्य कृते निर्मीयेरन्नित्यत आह—ब्रह्माणं मुनयः पूर्वमिति । स्वयमेव लीलया सकलवेदग्रहणसमर्थं ब्रह्माणं निर्माय स्वात्मनि नित्यमवस्थिता एव वेदास्तस्मै दत्ता इत्यर्थः । न च नित्यसिद्धवेदसमर्पणे शिवस्योपाध्यायतुल्यता । उपाध्यायो हि स्वयमन्यतो लब्ध्वा शिष्यानध्यापयति । शिवस्तु नैवमन्यतोऽधीते स्वात्मनि नित्यमवस्थितानामेव तेषां ब्रह्मद्वारा संप्रदायं प्रवर्तयति। "यो ब्रह्माणं विदधाति पूर्वं यो वै वेदांश्च प्रहिणोति तस्मै" इति स्थितानामेव वेदानां प्रापणश्रुतेः॥४०॥ स्मृति-

१. वेदसं ग. २. तै-सं-का. १. प्र. ८. अनु. ६. ३. अथ. म० १. ४. श्वे. अ. ६. मं. १८.

विष्णुर्विश्वजगन्नाथो विश्वेशस्य शिवस्य तु ।
आज्ञया परया युक्तो व्यासो जज्ञे गुरुर्मम ॥ ४२ ॥
स पुनर्देवदेवस्य प्रसादादम्बिकापतेः ।
संक्षिप्य सकलान्वेदांश्चतुर्धा कृतवान्द्विजाः ॥ ४३ ॥

---

पुराणादीनामपि तर्हि शिवेनैवप्रापणं चेद्वेदसाम्यं न चेदप्रामाण्यं तत्राऽऽह—ब्रह्मा सर्वजगत्कर्तेति । वेदे हि द्वौ भागौ कर्मभागो ज्ञानभागश्चेति । आद्यस्यार्थः स्मृतिमुखेन ब्रह्मणा शिवाज्ञयैव व्याख्यातः । द्वितीयस्य तु विष्णुना व्यासरूपेणावतीर्य पुराणमुखेनेति स्मृतिपुराणानां वेदमूलता न स्वातन्त्र्यमित्यर्थः । यद्यपि स्मृतिष्वपि विद्यानिरूपणमस्ति तथाऽपि तत्प्रासङ्गिक द्रव्यशुद्धिप्रसङ्गेन हि कथितम्—"क्षेत्रज्ञस्येश्वरज्ञानाद्विशुद्धिः परमा मता" इति । चतुर्थाश्रमधर्मप्रसङ्गेन चौपनिषदतत्त्वनिरूपणं कृतमिति । पुराणानां तु विद्याप्राधान्यं । प्रासङ्गिकं कर्मनिरूपणम् । पुराणेषु हि जगदुत्पत्तिस्थितिलयकारणत्वं शिवस्याभिप्रेत्योत्पत्तिकारणत्वं सर्गेणोक्तम् । लयकारणत्वं च प्रतिसर्गेण । स्थितिकारणत्वं च वंशमन्वन्तरवंशानुचरितनिरूपणेन । तत्प्रसङ्गादाश्रमधर्मा आगता इति । अत एव धर्मविषये स्मृतिपुराणविप्रतिपत्तौ स्मृतीनां प्राबल्यं तत्र तासां तात्पर्यत इति तत्त्वज्ञानविषये पुराणप्राबल्यमिति विवेकः । (ब्रह्मणस्सकलान् वेदान् वसिष्ठः प्राप्तवानृषिः । तस्माच्छाक्तिस्ततोधीमान्पराशरमहामुनिः । पराशरान्महाबुद्धिः वेदव्यासो महामुनिरिति ) ॥ ४१ ॥ व्यासेन पुराणानां प्रणयनं प्रागुक्तं तस्य तु विष्णोरवतारत्वमिदानीमाह । विष्णुर्विश्वजगन्नाथ इति ॥ ४२ ॥ न केवलं वेदोपबृंहणाय पुराणप्रणयनम् । महतो

ऋग्वेदः प्रथमः प्रोक्तो यजुर्वेदस्ततः परः ।
तृतीयः सामवेदाख्यश्चतुर्थोऽथर्व उच्यते ॥ ४४ ॥
एकविंशतिभेदेन ऋग्वेदो भेदितोऽमुना ।
यजुर्वेदो द्विजा एकशतभेदेन भेदितः ॥ ४५ ॥
नवधा भेदितोऽथर्ववेदः साम सहस्रधा ।
व्यस्तवेदतया व्यास इति लोके श्रुतो मुनिः ॥ ४६ ॥
अयं साक्षान्महायोगी व्यासः सर्वज्ञ ईश्वरः ।
महाभारतमाश्चर्यं निर्ममे भगवान्मुनिः[1] ॥ ४७ ॥

---

वेदस्याल्पबुद्धिभिर्दुरवगाह्यत्वात्तत्तच्छाखाविभागं कृत्वा संप्रदायप्रवर्तनमपि तेनैव कृतमित्याह—स पुनर्देवदेवस्येति ॥ ४३ ॥ अथर्वशब्दोऽकारान्तोऽप्यस्ति । 'अथर्वाय ज्येष्ठपुत्राय प्राह' इति प्रयोगात्तेन लोके प्राचुर्येण प्रोक्तत्वाद्वेदोऽप्यथर्वः । प्रोक्तार्थे वाऽणि कृते 'संज्ञापूर्वको विधिरनित्यः' इति वृद्धिप्रकृतिभावयोरभावः ॥ ४४ ॥ ४५ ॥ गीतिविशेषः साम । "गीतिषु सामाख्येति हि जैमिनिः । तदाश्रयमन्त्रयोगाद्वेदोऽपि साम । उक्ते वेदविभागे व्यासनामनिर्वचनमेव प्रमाणमाह—व्यस्तवेदतयेति । वेदान्विभज्याऽऽसमन्ताच्छिष्येभ्यो व्यस्यतीति व्यासः । व्याङावुपसर्गौ पचाद्यच् । व्यस्ता वेदाः शिवेनैव कर्त्रा महर्षिरूपेण निजेनैव अवतारान्तरेण करणेनेति करणे वा घञ् ॥ ४६ ॥ सर्वज्ञत्वं द्रढयितुं साकल्येन चतुर्विधपुरुषार्थप्रकाशकस्य महाभारतस्य तेनैव प्रणयनमाह । अयं साक्षान्महायोगीति। उक्तं हि । 'धर्मे चार्थे च कामे

१. गुरुः ख. २. गाह. ख. ३. मुण्ड-१-मं-३. ४. शिष्येभ्यस्यति. ख. ५. सार्वज्ञ्यं प्रथयितुम् ।

तस्य शिष्या महा[1]भागाश्चत्वारो मुनिसत्तमाः।
अभवन्स मुनिस्तेभ्यः पैलादिभ्योऽददाच्छ्रुतीः ॥ ४८ ॥
तेभ्योऽधीता श्रुतिः सर्वैः साध्वी विप्रा[2]ः सनातनी।
तया वर्णाश्रमाचारः प्रवृत्तो वेदवित्तमाः ॥ ४९ ॥
पुराणानां प्रवक्तारं स मुनिर्मां न्ययोजयत्।
तस्मादेव मुनिश्रेष्ठाः पुराणं प्रवदाम्यहम् ॥
श्रद्धया परया युक्ताः शृणुध्वं मुनिपुङ्गवाः ॥ ५० ॥
इति श्रुत्वा [3]मुनिश्रेष्ठा नैमिशीयाः सनातनाः ॥ ५१ ॥
प्रणम्य सूतमव्यग्रं पूजयामासुरादरात्।
सोऽपि सर्वजगद्धेतुं शङ्करं परमेश्वरम् ॥ ५२ ॥
अम्बिकापतिमीशानमनन्तानन्दचिद्घनम्।
ध्यात्वा तु सुचिरं कालं भक्त्या [4]परवशोऽभवत् ॥ ५३ ॥

---

च मोक्षे च भरतर्षभ। यदिहास्ति तदन्यत्र यन्नेहास्ति न तत्क्वचित्' ॥ इदमेव हि महाभारतप्रणयनं साक्षाद्विष्णोरवतार इत्यत्र गमकम्। यदाहुः— 'कृष्णद्वैपायनं व्यासं विद्धि नारायणं प्रभुम्। को ह्यन्यः पुण्डरीकाक्षान्महाभारतकृद्भवेत्' इति ॥ ४७ ॥ पैलादिभ्यः पैलवैशम्पायनजैमिनिसुमन्तुभ्यश्चतुरो वेदान्दत्वा ते यथा तत्प्रवर्तने नियुक्ताः एवं पुराणानि मह्यं दत्वाऽहं नियुक्त इति तदाज्ञयैवेयं मया व्याक्रियतइत्यर्थः ॥ ४८ ॥ ४९ ॥ ५० ॥ शृणुध्वमिति व्यत्ययेनाऽऽत्मनेपदम् ॥ ५१ ॥ प्रणम्येति। पूर्वं दृष्ट्वा

१. त्मानः ख. २. पापप्रणाशिनी. ख. ३. वचस्तस्य. ग. ४. स्ताषौन्मिहामतिः ख.

**नमः सोमाय रुद्राय शंकराय महात्मने ।**
**ब्रह्मविष्णुसुरेन्द्राणां ध्यानगम्याय शूलिने ॥ ५४ ॥**

यथार्हमिति, दर्शननिबन्धना पूजा । इह तु श्रवणारम्भनिबन्धने प्रणामपूजे मुनीनाम् । एवं पृष्टो मुनिश्रेष्ठैरित्यत्र सूतेन शिवस्य प्रणिधानं चाक्षुषदीक्षार्थं । इह तु प्रणिधानं पुराणारम्भायेति । सर्वजगद्धेतुमिति जगतामुपादानरूपेण । शङ्करं परमेश्वरमिति निमित्तरूपेण । अम्बिकापतिमिति लीलावताररूपेणानन्तानन्दाचिद्घनमिति निष्कलरूपेण प्रणिधानमिति ॥ ५२ ॥ ५३॥ भक्तिपारवश्यादेव तन्मुखादप्रयत्नेनेयमुद्गता स्तुतिः । नमः सोमायेति । सोमश्चन्द्रः शिवस्य सप्तमी मूर्तिः । इदं च पृथिव्यादिमूर्त्यन्तरसप्तकस्याप्युपलक्षणम् । उमया वा सहितः सोमः । रुदमानिष्टं संसारं द्रावयतीति रुद्रः । उक्तं च वायवीयसंहितायाम्— '[१]रुद्दुःखं दुःखहेतुं च विद्रावयति नः प्रभुः । रुद्र इत्युच्यते तस्माच्छिवः परमकारणम्' इति॥ न केवलमनिष्टनिवृत्ताविष्टप्राप्तावपि स एव कारणमित्याह—शङ्करायेति । भक्तिव्यतिरिक्तैरुपायसहस्रैरप्यगम्यत्वकथनाय तस्य निरतिशयं प्रभावमाह—महात्मन इति । तदुपपादनाय भक्तिविरहे प्रबलानामपि प्रयत्नान्तरेषु कुण्ठिता इत्याह—ब्रह्मविष्णुसुरेन्द्राणामिति । उक्तं हि तलवकारोपनिषदि '[२]ब्रह्म ह देवेभ्यो विजिग्ये' इत्यारभ्य पराशिवानुग्रहेणैव प्राप्तविजया इन्द्रादयः स्वमाहात्म्यनिबन्धनमेव तं विजयं मेनिरे । शिवश्च तेषां विनाशहेतुं मदमपनेतुं दूरे दिव्येन ज्योतिर्मयेन रूपेणाऽऽविरासीत्किमिदं लोकोत्तरं रूपमिति विमृशन्तोऽपि ते तं नाज्ञासिषुः । तदाह '[३]तन्न व्यजानन्त किमेतद्यक्षमिति' । यक्षं यजनीयं पूजार्हमिति ततस्तज्जिज्ञासया गतयोरग्निवाय्वोः प्रतिहतयोः स्वयं गतायेन्द्राय देवो दर्शनमपि न प्रादात् ततो व्यपगतमदाय निरतिशयभक्तियुक्ताय तत्रैव हैमवतीरूपेणावतीर्य व्याहार्षीत्पर-

१. यद्दुःखं दुःखहेतुं वा विद्रावयति स प्रभुः ख. २. केन. मं १४. ३. केन. मं०. १६. ४. यष्टव्यं. ग.

भक्तिगम्याय भक्तानां विदुषामात्मरूपिणे ।
स्वानुभूतिप्रसिद्धाय नमस्ते सर्वसाक्षिणे ॥ ५५ ॥
इति श्रीस्कान्दपुराणे श्रीसूतसंहितायां शिवमाहात्म्यखण्डे
ग्रन्थावतारकथनं नाम प्रथमोऽध्यायः ॥ १ ॥

---

शिवोऽयं भवतां विनाशहेतुं मदमपनेतुमनुग्रहेणाऽऽविरासीदिति। तदिदमुक्तं ध्यानगम्यायेति॥५४॥ भक्तिगम्यायेति भक्तेः फलभूतं ज्ञानयोगमाह---विदुषामात्मरूपिण इति विदुषो निजस्वरूपज्ञानिनः स्वात्मानमेव प्रापयतीत्यर्थः। इत्थंभूतस्य शिवस्य स्वरूपमाह---स्वानुभूतिप्रसिद्धायेति। स्वयं स्वतन्त्र एव भासते न प्रकाशान्तरेण। स्वातिरिक्तस्य च सर्वस्य भाने स्वयमेव हेतुर्भवति। "[1]न तत्र सूर्यो भाति न चन्द्रतारकं नेमा विद्युतो भान्ति कुतोऽयमग्निः। तमेव भान्तमनुभाति सर्वम्" इति च श्रुतेरित्यर्थः ॥ ५५ ॥

इति श्रीमत्काशीविलासक्रियाशक्तिपरमभक्तश्रीमत्र्यम्बकपादाब्जसेवापरायणे-
नोपनिषन्मार्गप्रवर्तकेन माधवाचार्येण विरचितायां श्रीसूतसंहिताता-
त्पर्यदीपिकायां शिवमाहात्म्यखण्डे ग्रन्थावतारकथनं नाम
प्रथमोऽध्यायः ॥ १ ॥



---

१. कठ०. अ. २. व. ५. म०. १५.

## ॥ द्वितीयोऽध्यायः ॥

### पाशुपतव्रतम्

नैमिशीया ऊचुः—

सर्वं जगदिदं विद्वन्विभक्तं केन हेतुना ।
उत्पन्नं केनचित्तस्मादनित्यं च ततः पशुः ॥ १ ॥
अज्ञत्वान्नैव हेतुः स्यान्न च प्रकृतिरेव च ।
अतः सर्वजगद्धेतुरन्य एव तपोधन ॥ २ ॥

अथ पाशुपतव्रतपूर्वकं[3] देवोपदेशादनुभवपर्यन्तं बोधो भवतीति वक्तुं द्वितीयोऽध्याय आरभ्यते । तत्रास्ति किंचिज्जगतः कारणमिति सामान्यतो जानन्त इदं तदिति विशेषेणाजानन्तो मुनयस्तज्जिज्ञासया सूतं पप्रच्छुः— सर्वं जगदिदं विद्वन्निति । प्रश्नोपपत्तये सामान्यतो ज्ञानहेतुमाह—उत्पन्नं केनचिदिति । अनित्यत्वादेव जगदुत्पत्तिमदुत्पत्तिश्च न विना कारणेन । अतोऽस्ति किंचित्कारणमिति सामान्यतो ज्ञातमित्यर्थः । अधुना विशेषेण ज्ञाने कारणमाह । ततः पशुरिति ॥ १ ॥ अज्ञत्वादिति । जगत उपादाना-दिज्ञानमन्तरेण तत्कर्तृत्वासिद्धेर्जीवस्य परिच्छिन्नज्ञानत्वात्प्रकृतेश्च जडत्वेन तदभावान्न तत्कारणतोपपत्तिरित्यर्थः । मलमायाकर्मलक्षणपाशत्रयबद्धा जीवाः पशवः । तत्र मलपाशमात्रबद्धा विज्ञानकलाः । ते द्विविधाः । समाप्तकलुषा असमाप्तकलुषाश्च । आद्या विद्येशाः । द्वितीयाः सप्तकोटिमहामन्त्रात्मकाः । मलकर्मलक्षणपाशद्वयबद्धाः प्रलयकलाः । तेऽपि मलकर्मणोः परिपाकभावा-भावाभ्यां द्विविधाः । येषां तत्परिपाको नास्ति ते कर्मवशान्नानायोनिषु

१. ब्रह्मन्. ग. २. कस्मात् . ग. ३ कादेवो. ख. ४. जगदुत्पत्तिश्च. ख. ५. न कारणतो. ग.

तमस्माकं महाभाग ब्रूहि पुण्यवतां वर ।

सूत उवाच—

पुरा विष्ण्वादयो देवाः सर्वे संभूय कारणम् ॥ ३ ॥

विचार्य जगतो विप्राः संशयाविष्टचेतसः ।

अतीव सुखदं शुद्धं रौद्रं लोकं समागमन्[1] ॥ ४ ॥

तेषां मध्ये महादेवः संसारद्रावको हरः ।

रुद्रः परमकारुण्यैः[2] स्वयमाविरभूद्द्विजाः ॥ ५ ॥

---

जायन्ते । येषां तु मलकर्मपरिपाकोऽस्ति[3] तेषु केषु चिदीश्वरानुग्रहाद्भुवनपतयो भवन्ति । पाशत्रयबद्धास्तु कलादियोगात्सकलाः । तत्राष्टादशाधिकशतसंख्याकाः शिवानुग्रहान्मन्त्रेश्वरा भवन्ति । तत्र शतरुद्राः शतमण्डलिनोऽष्टौ क्रोधादयोऽष्टौ श्रीकण्ठवीरेश्वरौ[4] चेति । तद्व्यतिरिक्तानां मध्ये येषां मलत्रयपरिपाकस्तानाचार्यरूपेण शिव एव दीक्षयाऽनुगृह्णाति । अपरिपक्वमलांस्तु मलपरिपाकार्थं भोगाय नानायोनिषु विनियुङ्क्ते । एते सर्वेऽपि पशवः सत्यपि ज्ञानोत्कर्षतरतमभावे सार्वज्ञ्याभावान्न जगतः कर्तारः । प्रकृतेस्तु जडत्वाद्दूरत एव कर्तृत्वम् । अतोऽन्येनैव केनचित्सर्वज्ञेन जगतः कर्त्रा भवितव्यम् ॥ २ ॥ कोऽसाविति मुनीनां जिज्ञासा । अत्रोत्तरमथर्वशिरसि स्थितयाऽऽख्यायिकयैव सूत आह—पुरा विष्ण्वादयो देवा इति आध्यायपरिसमाप्तेः । अतीव सुखदं शुद्धमिति । तथा च श्रुतिः "देवा ह वै स्वर्गं लोकमगमन्"[5] इति । तदाहुः—"यन्न दुःखेन संभिन्नं न च ग्रस्तमनन्तरम् । अभिलाषोपनीतं च सुखं स्वर्गपदास्पदम्" इति ॥ ३॥ ४ ॥ परम-

---

१. समाविशन्. ख. २. कारुण्यात्. ग. ३. विपाकोऽस्ति ग. ४. श्रीकरवीरेशौ. ख. ५. अथ. म० १.

अदृष्टपूर्वं तं दृष्ट्वा देवा विष्णुपुरोगमाः।
प्रणिपत्य महादेवमपृच्छन्को भवानिति ॥ ६ ॥
सोऽब्रवीद्भगवान्रुद्रः पशूनां पतिरीश्वरः।
सर्वज्ञः सर्वतत्त्वानां तत्त्वभूतः सनातनः ॥ ७ ॥
अहमेको जगद्धातुरासं प्रथममीश्वरः।
वर्तामि च भविष्यामि न मत्तोऽन्योऽस्ति कश्चन ॥ ८ ॥

---

कारुण्यः करुणैव कारुण्यम्। चतुर्वर्णादिभ्यः स्वार्थे इति ष्यञ्। अदृष्टपूर्वमिति तमाविर्भूतं रुद्रं देवाः को भवानित्यपृच्छन्। तदाह श्रुतिः "ते देवा रुद्रमपृच्छन्को भवानिति" इति ॥ ५ ॥ ६ ॥ पशूनां पतिः। उक्तलक्षणानां त्रिविधानां पशूनामनुग्रहेण पालनात्पतिः। उक्तं हि मृगेन्द्रसंहितायाम्—"अथानादिमलापेतः सर्वकृत्सर्वदृक्शिवः। पूर्वं व्यत्यासितस्याणोः पाशजालमपोहति" इति। पाशानां स्वव्यापारे सामर्थ्याधानात्पशूनां भोगापवर्गप्रदानाच्च तेषामीष्ट इतीश्वरः। यथाऽऽहुरागमिकाः—"भुक्ति मुक्तिमणूनां स्वव्यापारे समर्थनाधानम्। जडवर्गस्य विधत्ते सर्वानुग्राहकः शंभुः" इति। सर्वतत्त्वानां तत्त्वभूत इति। आप्रलयमवस्थितानि तत्त्वानि प्रलयेऽप्यवस्थानात्तु सनातनः शिवः सर्वतत्त्वानां तत्त्वभूतः। तदुक्तम्—"आप्रलयं यत्तिष्ठति सर्वेषां भोगदायि भूतानाम्। तत्तत्त्वमिति प्रोक्तं न शरीरघटादि तत्त्वमतः" इति ॥ ७ ॥ रुद्रस्योत्तरम्। अहमेक इति। जगद्धातुर्ब्रह्मणः सकाशादपि प्रथममहमासं वर्तामि भविष्यामि च। एकैककालकृतपरिच्छेदविरहाभिप्रायं नतु कालत्रयसम्बन्धाभिप्रायमहमेक इति न मत्तोऽन्य इति च। स्वातिरिक्तस्य कालस्यापि निरासात्। अत एव चैक

---

१. गद्धेतुः ख. २. अथ. म०. १.। ३. पशूनां. ग.

मन्मायाशक्तिसंक्लृप्तं जगत्सर्वं चराचरम्।
साऽपि मत्तः पृथग्विप्रा नास्त्येव परमार्थतः ॥ ९ ॥
मामेवं वेदवाक्येभ्यो जानात्याचार्यपूर्वकम्।
यः पशुः स विमुच्येत ज्ञानाद्वेदान्तवाक्यजात् ॥१०॥

---

इत्यपि द्वित्र्यादिसंख्यासम्बन्धनिरासो विवक्षितो नैकत्वसम्बन्धः। यदाह श्रुतिः—"अहमेकः प्रथममासं वर्तामि च भविष्यामि च नान्यः कश्चिन्मत्तो व्यतिरिक्तः" इति ॥ ८ ॥ कथं तर्हि लोकस्य चराचरजगद्गोचरोऽनुभव इत्यत आह—मन्मायाशक्तिसंक्लृप्तमिति। तर्हि तयैव मायया सद्वितीयत्वमिति चेन्न। तस्या अपि परमार्थतः सत्त्वाभावादित्याह—साऽपीति। अयमभिसन्धिः। यदनुविद्धानि हि यान्यवभासन्ते तत्र तानि परिकल्पितानि यथाऽयं सर्पोऽयं दण्ड इयं धारेति रज्ज्वां इदमंशेनानुविद्धतया भासमानाः सर्पदण्डधारादयस्तत्र परिकल्पिताः। सदनुविद्धं चेदं सकलं जगदवभासते सन्घटः सन्पट इति। अतः सन्मात्ररूपे परशिवे विश्वं परिकल्पितम्। न च तस्य सन्मात्रस्यानवभासने तदनुवेधेन कल्पितावभाससंभव इति सदैव तस्य प्रकाशोऽभ्युपगन्तव्यः। न च तस्य प्रकाशकान्तरं किंचिदस्ति। स्वव्यतिरिक्तस्य सर्वस्य कल्पिततया जडत्वात्। अतः स्वप्रकाशतया तदेव चिद्रूपम्। तथाच श्रूयते "सद्धीदं सर्वं सत्सादिति। चिद्धीदं सर्वं काशते काशते च" इति। तस्य च स्वात्मनोऽनतिरेकादात्मनः परमप्रेमास्पदत्वेन परमानन्दरूपत्वात्। श्रुतिभिश्च परानन्दैकरसत्त्वं प्रतिपादितम्। इत्थं सच्चिदानन्दैकरसः परमात्मा

---

१. यन्मायां. ख. २. अथ. म०, १. ३. सत्याभावात्. ख.

मन्मायेत्यत्र मच्छब्देनोच्यते । कल्पितस्य जगतोऽनाद्यनन्तत्वे सर्वदोपलम्भप्रसंगान्न कादाचित्कत्वम् । कादाचित्कस्य च कारणापेक्षत्वात्तदनुरूपं किंचित्कल्पितमुपादानमङ्गीकर्तव्यम् । सत्योपादानत्वे कार्यस्यापि कल्पितत्वव्याघातात्तस्य च कारणस्याऽऽदिमत्त्वे तादृक्कारणान्तरकल्पनानवस्थापातादनाद्येव तत्स्वीकर्तव्यं सेयमुच्यते मायेति । सा च सत्वरजस्तमोगुणात्मिकाऽपि न सांख्याभिमतप्रधानवत्स्वतन्त्रा किंत्वीश्वरस्य परतन्त्रेत्याशयेन शक्तिरित्युक्तम् । 'शक्तिरिति परतन्त्रतामाहेति' विवरणाचार्याः । ते च गुणाः परस्पराभिभवात्मकाः । उक्तं हि गीतासु—"रजस्तमश्चाभिभूय सत्त्वं भवति भारत । रजः सत्वं तमश्चैव तमः सत्त्वं रजस्तथा" इति ॥ तेन सा माया त्रेधा भवति । रजस्तमसोरत्यन्ताभिभवेन विशुद्धसत्त्वात्मिका तावदेका । ईषदुद्भूताभ्यां रजस्तमोभ्यां मलिनसत्त्वात्मिका द्वितीया । तमसोऽत्यन्तमुद्भवेनात्यन्ताभिभूतयोः सत्त्वरजसोरसत्प्रायत्वात्केवलतमोमयी तृतीयेति । तत्र मन्मायेत्यत्र मच्छब्दोपलक्षितं मायातीतं सच्चिदानन्दैकरसं पराशिवस्वरूपम् । विशुद्धसत्त्वप्रधाना तु माया मायिनं न वशीकरोति । किंतु तस्य वशे वर्तते । तथाच स्वाधीनमायोपाधिविशिष्टं तदेव परशिवस्वरूपमिह मच्छब्देनाभिधीयमानमीश्वरो जगत्कर्ता सर्वज्ञो भोगप्रद इत्यादिशब्दैरुच्यते । उक्तं हि व्यासेन "फलमत[३] उपपत्तेः" इति । मलिनसत्त्वप्रधाना तु मायिनं वशीकरोति तद्वशीकृतं च चैतन्यं जीवः संसारी कर्ता भोक्तेत्यादिभिरुच्यते । केवलतमोमयी तु स्वाश्रयमसत्प्रायं कृत्वा भूतभौतिकजगदात्मकभोग्यरूपेण च विवर्तते[४] । तत्र मच्छब्देनाभिहितो य ईश्वरो भोगप्रदस्तत्परतन्त्रा माया मन्मायाशक्तिरित्युक्ता । तयैव द्वितीयां दशां प्राप्तयोपाधिभूतया विशिष्टा भोक्तारो जीवशब्देनोक्ताः । तयैव तृतीयां दशां प्राप्तयोपाधिभूतया विशिष्टं भोग्यं

१. सत्युपा. ख. २. म. अ. १४. श्लो. १०. ३. ब्र. सू. अ. ३. पा २. सू. ३८. ४. वर्तयति. ख.

इत्युक्त्वा भगवान्रुद्रः स्वं पूर्णं रूपमाविशत्।
नापश्यन्त ततो रुद्रं देवा विष्णुपुरोगमाः ॥ ११ ॥

जडं जगदचरमित्युच्यते। इत्थं भोगप्रदभोक्तृभोग्यविभागकल्पिकाया मायायाः कल्पितत्वान्मायातीतपरशिवव्यतिरेकेण परमार्थतो न भाव इति। तदुक्तं श्वेताश्वतरोपनिषदि—"भोक्ता भोग्यं प्रेरितारं च मत्वा सर्वं प्रोक्तं त्रिविधं ब्रह्मचैतत्" इति। यावद्ब्रह्म न जानाति तावत्प्रेरयिता भोगप्रद ईश्वरः। भोक्ता जीवः भोग्यं जगदिति विभागः। ब्रह्म मत्वा तु स्थितस्यैतत्त्रिविधं ब्रह्मैव भवति। अतो मायाशक्तिसंक्लृप्तमित्यर्थः। आगामिका अप्याहुः—"शिवो दाता शिवो भोक्ता शिवः सर्वमिदं जगत्। शिवो यजति यज्ञैश्च यः शिवः सोऽहमेव हि" इति। मायातीतः शिव एव स्वमायया भोगदाता भोक्ता भोग्यं च भवति। यदा तु भोक्ता शिवं साक्षात्कुरुते तदा विभागहेतुभूताया मायाया नाशात्स्वयं शिवरूपतामेव प्रतिपद्यत इत्यर्थः। अयमर्थः सर्वोऽग्रे प्रपञ्चेन भविष्यति ॥९॥ उक्तमायापरिहारेण शिवस्वरूपप्राप्तावुपायमाह मामेवमिति। वेदवाक्येभ्य इति। तत्त्वमसीत्यादिभ्यः। स एव मुख्य उपायः। "तं त्वौपनिषदम्" इति श्रुतेः। आचार्यपूर्वकमिति। "आचार्यवान्पुरुषो वेद" इति श्रुतेः। 'यो जानाति सोऽज्ञानान्मुच्यते' इति। 'ब्रह्मवेद ब्रह्मैव भवति' इति। तमेव विदित्वाऽतिमृत्युमेति'। तमेवं विद्वानमृत इह भवति नान्यः पन्था विद्यतेऽयनाय' इति च श्रुतेः ॥ १० ॥ इत्थं गुरूपदेशादेव ज्ञातव्यं स्वरूपमुपदिश्य तत्साक्षात्कारसाधनानां पाशुपतव्रतप्रणवपञ्चाक्षरजपादीनां शास्त्रत एव देवैर्ज्ञातुं शक्यत्वेन कर्तव्याभावाच्छिवः

१. पूर्णं रूपं समाविशत्. ग. २. श्वे. अ. १. मं०-१२. ३. भावः. ग. ४. भूत्वा. ख. ५. कामिके. पट. ३. श्लो. ५१४.

अथर्वशिरसा देवमस्तुवंश्चोर्ध्वबाहवः ।
अन्यैर्नानाविधैः सूक्तैः श्रीमत्पञ्चाक्षरेण च ॥ १२ ॥
पुनः साक्षाच्छिवज्ञानसिद्ध्यर्थं मुनिपुङ्गवाः ।
अग्निहोत्रसमुत्पन्नं भस्माऽऽदायाऽऽदरेण तु ॥ १३ ॥
निधाय पात्रे शुद्धे तत्पादौ प्रक्षाल्य वारिणा ।
द्विराचम्य मुनिश्रेष्ठाः सपवित्राः समाहिताः ॥ १४ ॥
ओमापः सर्वमित्येतन्मन्त्रमुच्चार्य भक्तितः ।
ध्यात्वा विष्णुं जलाध्यक्षं गृहीत्वा भस्म वारिणा॥१५॥
विमृज्य मन्त्रैर्जाबालैरग्निरित्यादिसप्तभिः ।
समाहितधियः शुद्धा शिवं ध्यात्वा शिवामपि ॥ १६ ॥
समुद्धूल्य मुनिश्रेष्ठा आपादतलमस्तकम् ।

---

स्वप्रतिष्ठोऽभवदित्याह—इत्युक्त्वा भगवानुद्र इति ॥ ११ ॥ उपदेशपरितुष्टास्तुष्टुवुरित्याह—अथर्वशिरसा देवमिति । यो वै रुद्र इत्यादिनेत्यर्थः । तदाह श्रुतिः - [१]ततो देवा रुद्रं नापश्यन् । ते देवारुद्रं ध्यायन्ति । ते देवा ऊर्ध्वबाहवः [३]स्तुन्वन्ति । यो वै रुद्रः स भगवानित्यादि । अलभ्यलाभनिबन्धनस्य हर्षोत्कर्षस्य लिङ्गमूर्ध्वबाहुत्वम् । अन्यैर्नानाविधैः सूक्तैरिति । शतरुद्रियादिभिः ॥ १२ ॥ १३ ॥ १४ ॥ ओमापः सर्वमिति । '[४]ओमापो ज्योती रसोऽमृतं ब्रह्म भूर्भुवः स्वरोम्' इत्येतन्मन्त्रमित्यर्थः सर्वशब्देनार्थद्वारा ज्योतिरादयः शब्दा गृह्यन्ते ॥ १५॥ अग्निरित्यादीति । सप्तभिरिति शब्दपरो निर्देशः। आदिशब्देन जलमिति स्थलमित्यादयो गृह्यन्ते १६॥

---

१. शिरा. ख. २. अथ. म०. १. ३. स्तुवन्ति. ग. ४. नारा. ३. अनु. ३५.

सितेन भस्मना तेन ब्रह्मभूतेन भावनात् ॥ १७ ॥
ललाटे हृदये कुक्षौ दोर्द्वंद्वे च सुरोत्तमाः ।
त्रिपुण्ड्रधारणं कृत्वा ब्रह्माविष्णुशिवात्मकम् ॥ १८ ॥
एवं कृत्वा व्रतं देवा अथर्वशिरसि स्थितम् ।
शान्ता दान्ता विरक्ताश्च त्यक्त्वा कर्माणि सुव्रताः॥१९॥
वालाग्रमात्रं विश्वेशं जातवेदस्वरूपिणम् ।
हृत्पद्मकर्णिकामध्ये ध्यात्वा वेदविदां वराः ॥ २० ॥
सर्वज्ञं सर्वकर्तारं समस्ताधारमद्भुतम् ।
प्रणवेनैव मन्त्रेण पूजयामासुरीश्वरम् ॥ २१ ॥
अथ तेषां प्रसादार्थं पशूनां पतिरीश्वरः ।
उमार्धविग्रहः श्रीमान्सोमार्धकृतशेखरः ॥ २२ ॥
नीलकण्ठो निराधारो निर्मलो निरुपप्लवः ।
ब्रह्माविष्णुमहेशानैरुपास्यः परमेश्वरः ॥ २३ ॥

---

ब्रह्मभूतेनेति । ब्रह्मत्वेन भाव्यमानतया ब्रह्मीभूतेनेत्यर्थः ॥ १७—१९ ॥ वालाग्रमात्रमिति । अतिसूक्ष्मे दहराकाशे उपलभ्यमानत्वा[1]दीशस्य वालाग्रमात्रत्वम् । जातमाविर्भूतं वेदो ज्ञानं तदेव स्वरूपं तद्वन्तम् । यद्वा चरमसाक्षात्कारवृत्त्याभि[2]व्यक्तेः सकारणं संसारं दहतीति जातवेदा इत्याग्नित्वारोपः । श्रूयते हि—'[3]वालाग्रमात्रं हृदयस्य मध्ये विश्वं देवं जातवेदं वरेण्यम्', इति ॥ २०—२१ ॥ अथ तेषामिति । प्रसादो नैर्मल्यं संस्काराविद्यानिवृत्ति-

---

१. त्वादस्य ख. २. भिव्यक्तः. ग. ३. अथ. म०. ३५.

सांनिध्यमकरोद्रुद्रः साक्षात्संसार[1]नाशकः ।
यं प्रपश्यन्ति वेदान्तैः स्वरूपं सर्वसाक्षिणम् २४ ॥
तमेव शङ्करं साक्षाद्ददृशुः सुरसत्तमाः ।
यं न पश्यन्ति दुर्वृत्ताः श्रौतस्मार्तविवर्जिताः॥ २५ ॥

स्तदर्थमित्यर्थः । ननु व्रतादिभ्यः पूर्वमपि देवैः शिवः साक्षात्कृतः सन्नुपदिदेशेत्युक्तम् । व्रतादिभिः को विशेषो जात इति । न । सकळं रूपं तत्र साक्षात्कृतम् । निष्कळं तु शिवेनोपदिष्टं सच्छब्दतः परोक्षतयैव ज्ञातम् । अधुना तु व्रतादिभिः प्रतिबन्धकदुरितप्रक्षयाद्यत्प्राक्परोक्षतया ज्ञातं तदेव निष्कळं तत्त्वं प्रत्यक्षतोऽपश्यन्निति विशेषः । नन्वत्राप्युमार्धविग्रहः सोमार्धकृतशेखर इति सकळमेव रूपमुच्यते । न । यः प्राग्दृष्टः सकळ उमार्धविग्रहादिरूप इत्यनूद्य स एव निराधारत्वनिर्मलत्वादिना निष्कलरूपेण साक्षात्सांनिध्यमपरोक्षज्ञानविषयभावमकरोदिति विधानात् । निराधारः । स्वमहिमप्रतिष्ठत्वात् । स भगवः कस्मिन्प्रतिष्ठित इति स्वे महिम्नीति श्रुतेः । मायापारतन्त्र्यलक्षणकालुष्यविरहान्नैर्मल्यम् । अत एव मायाकार्यसंसारोपप्लवविरहान्निरुपप्लवः ॥ २२—२३ ॥ तदेव साक्षात्क्रियमाणं निष्कळं रूपं सकळाद्विविच्य विशदीकर्तुमाह—यं प्रपश्यन्तीत्यादिभिः । वेदान्तैः 'सत्यं ज्ञानमनन्तं ब्रह्म' इत्यादिभिः पदार्थपदैरवान्तरवाक्यगतैस्तत्त्वमस्यहं ब्रह्मास्मीत्यादिभिर्महावाक्यगतैश्च पदैरभिधावृत्त्या सगुणं रूपं ज्ञात्वा लक्षणया निष्कळं रूपं पश्यन्तीत्यर्थः । तथाहि सत्यज्ञानानन्तानन्दशब्दाः परापरजातिवाचिनस्तदाधारभूतामेकामानन्दव्यक्तिं ब्रह्मत्वेन लक्षयन्ति । तत्त्वमस्यहं ब्रह्मास्मीत्यादौ च तदादीनि पदानि सर्वज्ञत्वजगत्कारणत्वादिविशिष्टं त्वमादीनि च संसारादिविशिष्टमभि-

१. रमोचनः. ख. २. तं न निष्कलं. ग ३. छा. अ. ७. खं. २४. मं. १. ४. तै. ब्र. व. अनु १

तमेव शंकरं साक्षाद्ददृशुर्देवपुंगवाः ।
यत्प्राप्त्यर्थं द्विजैर्वेदा अधीयन्ते समाहितैः ॥ २६ ॥
तमेव रुद्रमीशानं ददृशुस्त्रिदशा भृशम् ।
यं यजन्ते मुनिश्रेष्ठाः श्रद्धया ब्राह्मणोत्तमाः ॥ २७ ॥
तमेव परमं देवं ददृशुः स्वर्गवासिनः ।
यं प्रपश्यन्ति देवेशं योगिनो दग्धकिल्बिषाः ॥ २८ ॥

---

धाय विरुद्धं विशेषणांशद्वयं परित्यज्याखण्डैकरसं लक्षयन्ति । स्वरूपमिति । स्वं निरस्तसमस्तोपाधिकं रूपमित्यर्थः । सर्वसाक्षिणामिति । यथा साक्षी व्यवहारानननुप्रविष्ट उदासीन एवं संसारानननुप्रविष्टमुदासीनमित्यर्थः । अत्रापि शंकरमिति सकलं रूपमनूद्य तस्य तमेव साक्षाद्ददृशुरिति निष्कळरूपतया साक्षाद्दर्शनमुच्यते । यद्वा शं सुखं संसारिणां मुक्तानां च करोतीति शंकरः । तथाहि शुभकर्मोपस्थापितविषयेन्द्रियसंप्रयोगजनितान्तःकरणवृत्तौ पर एवाऽऽनन्दः संसारिणां मात्रया व्यज्यते । श्रूयते हि 'एतस्यैवाऽऽनन्दस्यान्यानि भूतानि मात्रामुपजीवन्ति' इति । सकलसंसारनिवृत्तौ च साकल्येन व्यज्यते । 'एषोऽस्य परमानन्दः' इति श्रुतेः । तदुक्तं तत्त्ववाद्भिः—'स्वमात्रयाऽऽनन्दयदत्र जन्तून्सर्वात्मभावेन तथा परत्र । यच्छंकरानन्दपदं हृदब्जे विभ्राजते तद्यतयो विशन्ति" इति ॥ २५ ॥ यत्प्राप्त्यर्थं द्विजैर्वेदा अधीयन्ते । यं यजन्त इति । 'तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन' इति श्रुतेः।रुद्रमीशानमिति शंकरपदवदनुवादत्वमेव। यद्वा रुदं दुःखं द्रावयतीति रुद्रः । अपरतन्त्रत्वादीशानश्चेति ।निष्कळपरतया व्याख्येयम् ॥ २७ ॥

---

१. मुनिपु. ख. २. तदेव. ग. ३. ४. बृह०. अ० ४. ब्रा० ३ म० ३१. ५ बृह० अ० ४. ब्रा० ४ म० २२.

तमेव शर्वमानन्दं ददृशुर्लोकनायकाः ।
यस्य प्रसादाद्भगवान्विष्णुर्विश्वजगत्पतिः ॥ २९ ॥
तमेव सर्वलोकेशं ददृशुः पुरुषाधिकाः ।
यत्प्रसादाद्द्विजा ब्रह्मा स्रष्टा सर्वस्य सुव्रताः ॥ ३० ॥
तमेव सत्यमीशानं ददृशुः सत्वसंयुताः ।
अथ ते तुष्टुवुर्देवाः साम्बं सर्वफलप्रदम् ॥ ३१ ॥
संसाररोगदुःखस्य भेषजं गद्गदस्वराः ।
अथ देवो महादेवः साम्बो देवैरभिष्टुतः ॥ ३२ ॥
विलोक्य देवानखिलान्प्रीतोस्मीत्यब्रवीद्धरः ।
पुनर्देवान्समालोक्य रुद्रो विष्णुपुरोगमान् ॥ ३३ ॥
प्राह गम्भीरया वाचा भगवान्करुणानिधिः ।
अहमेव परं तत्त्वं मत्तो जातं जगत्सुराः ॥ ३४ ॥

---

न केवलं विविदिषन्ति विदन्ति चेत्याह—यं प्रपश्यन्ति देवेशं योगिन इति ॥ २८ ॥ यस्य प्रसादादिति । यद्विष्णोर्जगतः परिपालने सामर्थ्यं यद्ब्रह्मणस्तत्सृष्टौ सामर्थ्यं तदुभयं शिवप्रसादादेवेत्यर्थः ॥ ३० ॥ सत्वसंयुता विशुद्धसत्त्वाः । श्रूयते हि—'ज्ञानप्रसादेन विशुद्धसत्त्वस्ततस्तु तं पश्यते[२] निष्कलं ध्यायमानः' इति । अथ तं तुष्टुवुरिति । इयमपरोक्षज्ञानलाभनिबन्धना स्तुतिः अथर्वशिरसादेवमस्तुवन्निति तदुपदेशतः परोक्षज्ञानलाभनिबन्धना स्तुतिरिति । सर्वफलप्रदमिति । निरतिशयानन्दत्वेन सुखजातस्य समस्तस्यात्रैवान्तर्भावात् । श्रूयते हि—'यो वेद' 'सोऽश्नुते सर्वान्कामान्सह' इति ॥ ३१ ॥ ३२ ॥ ३३ ॥ ननूपदेशेन परोक्षज्ञानं देवानां शिवेन प्रागेव जनितम् । प्रागुक्तपाशुपतव्रतादिसाधनैश्च तैस्तन्निष्कलं रूप

१. सत्यविज्ञानं. ख. २. पश्यति. ग. ३. तै. ब्र. व अनु. १.

मय्येव संस्थितं नष्टं मत्समो नाधिकः सदा।
मत्स्वरूपपरिज्ञानादेव संसारनिर्हृतिः॥ ३५॥
मम ज्ञानं च वेदान्तश्रवणादेव जायते।
मुमुक्षोर्व्रतनिष्ठस्य प्रशान्तस्य महात्मनः॥ ३६॥
त्यक्तकर्मकलापस्य ध्याननिष्ठस्य शूलिनः।
यज्ञदानादिभिः क्षीणमहापापार्णवस्य च॥ ३७॥

---

मपरोक्षतया ज्ञातम्। किमतः परमहमेव परं तत्त्वमित्यादिना तेभ्यः शिवेनोपदेष्टव्यम्। अथ तस्य तन्निष्कलरूपस्य साक्षात्कृतस्यापि वक्त्रा स्वस्मादभेद उपदिश्यत इति। न। तस्याप्यहमेको जगद्धातुरित्यादिना प्रथमत एवोपदिष्टत्वात्। सत्यम्। येयं मम निष्कलरूपता भवद्भिः प्रागुपदेशतो ज्ञाता सैवेयमिदानीं भवद्भिः साक्षात्कृतेति देवैर्ज्ञाताया अपि शिवेन प्रत्यभिज्ञाप्यमानत्वात्। मत्तो जातमिति। 'यतो वा इमानि भूतानि जायन्ते। येन जातानि जीवन्ति। यत्प्रयन्त्यभिसंविशन्ति' इति श्रुतेः। मत्समो नाधिकः सदेति। मुक्तौ द्वितीयस्यैवाभावात्संसारे सतोऽपि द्वितीयस्य शिवादपकृष्टत्वान्न कदाचिदपि परैः शिवेन समोऽस्ति कुतोऽभ्यधिकस्य कथा। श्रूयते हि—'न तत्समश्चाभ्यधिकश्च दृश्यते" इति। ज्ञानस्य मोक्षहेतुत्वं यत्प्रागुपदिष्टम् 'यो जानाति स मुच्यते' इति तत्प्रत्यभिज्ञापयति—मत्स्वरूपपरिज्ञानादिति॥ ३४॥ ३५॥ ज्ञानस्य वेदान्तहेतुकत्वमुपादिष्टम् 'ज्ञानं वेदान्तवाक्यजम्' इति तत्प्रत्यभिज्ञापयति—मम ज्ञानं चेति। तदपि श्रवणमभिहितव्रतादिक्षपितकल्मषस्यैव फलपर्यन्तं भवति नान्यस्येत्याह—मुमुक्षोरिति। विविदिषापरिपन्थिपापापनयनं यज्ञादिना उत्पन्नविविदिषस्य मुमुक्षोर्वेदनपरिपन्थिपापापनयो व्रतादिनेति॥ ३६॥ त्यक्तकर्मेति। विक्षेपकत्वेन कर्मकलापस्य ध्यानविरोधित्वात्। शूलिन इति

---

१. निह्नवः ख. २. गद्धेतु. ग. ३. पराशवेन ख.

एवं मां यो विजानाति स सर्वं वेद नेतरः ।
उक्तं वेदान्तविज्ञानं युष्माकं सुरपुङ्गवाः ॥ ३८ ॥
व्रतं पाशुपतं चीर्णं यैर्द्विजैरादरेण च ।
तेषामेवोपदेष्टव्यमिति वेदानुशासनम् ॥ ३९ ॥

सूत उवाच—

इत्युक्त्वा भगवान्रुद्रस्तत्रैवान्तरधीयत ।
ततो देवा मुनिश्रेष्ठा देवदेवस्य वैभवम् ॥ ४० ॥

---

कर्मणि षष्ठी । शिवगोचरं यद्ध्यानं तन्निष्ठस्येत्यर्थः ॥ ३७ ॥ स सर्वं वेदेति । एकविज्ञानेन सर्वविज्ञानश्रुतेः । उक्ताधिकारकारणाभावे ज्ञातमपि ज्ञानमूषरनिक्षिप्तं बीजमिव निष्फलं भवेदित्याह—नेतर इति । 'येषां तपो ब्रह्मचर्यं येषु सत्यं प्रतिष्ठितम् । तेषामसौ विरजो ब्रह्मलोको न येषु जिह्म-मनृतं न माया च' इति श्रुतेः । ब्रह्मैव लोको निष्कलः शिव इत्यर्थः ॥३८॥ अत एव व्रतादिभिर्जनिताधिकाराणामेवोपदेष्टव्यमित्याह—व्रतं पाशुपतं चीर्णमिति । लोकरञ्जनमात्रप्रयोजनतया दाम्भिकैः कृतमपि व्रतादिकं निष्फ-लमेवेत्याह—आदरेणेति । इति वेदानुशासनमिति । "क्रियावन्तः श्रोत्रिया ब्रह्मनिष्ठाः स्वयं जुह्वत एकर्षिं श्रद्धयन्तः । तेषामेवैतां ब्रह्मविद्यां वदेत शि-रोव्रतं विधिवद्यैस्तु चीर्णम्' इत्यादिश्रुतेः । अत्रैकर्षिहोमशिरोव्रतादिकमध्य-यनधर्मत्वादाथर्वणिकानामेव । अन्येषां तु शिरोव्रतापरपर्यायं पाशुपतं पूर्वोक्तं सर्वश्रोतृसाधारणं क्रियावत्त्वादिकमेव विद्याधिकारकारणम् । तदुक्तं व्यासेन 'स्वाध्यायस्य तथात्वेन हि समाचारेऽधिकाराच्च सववच्च तन्नियमः' इति॥३९॥ अतः सर्वजगद्धेतुरन्य एवेति मुनिभिः प्रश्ने यन्निर्दिष्टं तदेतद्देवेभ्यः शिवे-नोपदिष्टमिति सूतः प्रत्यभिज्ञापयन्नुपसंहरति—इतीति । तं जगद्धेतुममन्य-

१. योऽभिजानाति. ख. २. मुण्ड०. ख०. २. म०. १०. ३. ब्र. सू. अ. ३. पा. ३. सू. ३.

स्वस्वरूपापरिज्ञानाद्बध्यते खलु मानवः ।
स्वस्वरूपपरिज्ञानात्कर्मभिर्न स बध्यते ॥ ॥ २९ ॥
स्वस्वरूपं तु शुद्धं हि सततं सर्वदेहिनाम् ।
स्वस्वरूपं तु चिन्मात्रं सर्वदा सर्वदेहिनाम् ॥ ३० ॥
नैव देहादिसंघातः पटवद्दृशिगोचरः ।
दृश्यरूपेण यद्रूपं दृश्यते देहपूर्वकम् ॥ ३१ ॥
तदनात्मैव दृश्यत्वाद्यदित्थं तत्तथा खलु ।
दृश्यत्वं देहपूर्वस्य संमतं सर्वदेहिनाम् ॥ ३२ ॥
दृश्यत्वं द्रष्टृपूर्वं तु लोके दृष्टं हि चेतनैः ।
द्रष्टुर्नास्ति हि दृश्यत्वं दृश्यत्वे द्रष्टृता न हि ।

---

दात्म्याध्यासस्य निवृत्तेस्तत्कृतैः पापैरपि न संश्लेष इत्यर्थः ॥ २९ ॥ शुद्धं हीति । "आत्मद्रव्यं स्वयं शुद्धं सत्यज्ञानादिलक्षणम्" इत्यादिना स्वतःशुद्धेः प्राक्प्रतिपादितत्वात् । "अस्नाविरꣳशुद्धमपापविद्धम्" इत्यादि श्रुतेः स्वात्मनः शुद्धत्वम् । चिन्मात्रमिति । देहेन्द्रियादिसंघातस्य जाग्रदादिसकलव्यवहारस्य यद्यत्प्रकाशकं साक्षिभूतं चैतन्यं तदेवाऽऽत्मनः स्वरूपमित्यर्थः ॥ ३० ॥ मानचो व्यावृत्तिं दर्शयति—नैवेति । दृशिगोचर इति । हेतुगर्भविशेषणमेतत् । दृशिः प्रागुक्तं चैतन्यं यतस्तद्गोचरो देहादिरतः पटवदनात्मेत्यर्थः । ननु दृशिगोचरत्ववद्द्रष्टृत्वमपि देहादिसंघातस्य परिदृश्यमानं कथमपलपितुं शक्यत इत्याशङ्कयाऽऽह—दृश्येति । अहं मनुष्यः कृशोऽहं स्थूलोऽहमहं कर्ता भोक्तेत्येवं द्रष्टृरूपतया देहादेर्योऽनुभवः सोऽपि तत्संसारादिविभ्रमवन्मिथ्यानुभवो दृश्यत्वहेतुना देहादेरनात्मत्वस्य घटादेरिव सिद्धत्वादित्यर्थः । हेत्वसिद्धिं परिहरति—दृश्यत्वमिति । अज्ञाः स्त्रीबालादयोऽपि मम देहो मम चक्षुर्ममान्तःकरणमिति द्रष्टुरात्मनः सकाशाद्भेदेनैव ज्ञेयतया देहादिकं व्यवहरन्ति । तत्सर्वेषामपि तत्र दृश्यत्वं संमतमित्यर्थः ॥ ३१ ॥ ३२ ॥ एवं दृश्यत्वहेतुना देहादेरनात्मत्वं प्रतिपाद्य द्रष्टुरात्मनस्तद्व्यतिरिक्तत्वं प्रतिपाद-

दृश्यरूपस्य कुड्यादेर्द्रष्टृता न हि दृश्यते ॥ ३३ ॥
अंशभेदेन दृश्यत्वं द्रष्टृत्वं चेति चेन्मतम् ।
अंशभेदे तु सांशत्वात्कुड्यवत्तदनात्मकम् ॥ ३४ ॥
अंशभेदेऽपि दृश्यांशः समानः कुड्यवस्तुना ।
द्रष्टृंशः केवलः साक्षादात्मैव स्यान्न संशयः ॥ ३५ ॥

यति—दृश्यत्वं द्रष्टृपूर्वं त्विति । द्रष्टृसमवेतया दृशिक्रियया व्याप्यं हि दृश्यं घटादिकं तच्च स्वव्यतिरिक्तद्रष्टृपूर्वकं दृष्टं लोके । अतो देहादेरपि स्वातिरिक्तेन केनचिद्द्रष्ट्रा भवितव्यमित्यर्थः । ननु देहातिरिक्तस्याऽऽत्मनोऽप्यहंप्रत्ययवेद्यत्वाद्दृश्यत्वमस्ति । अतो दृश्यस्य सर्वस्य स्वव्यतिरिक्तद्रष्टृपूर्वकत्वनियमो नास्तीत्यत आह—द्रष्टुरिति । द्रष्टुरात्मनो दृश्यत्वे द्रष्टृत्वं न स्याद्द्रष्टृत्वे न दृश्यत्वं कर्मकर्तृभावविरोधप्रसङ्गात् । न ह्येकस्यैव स्वसमवेतक्रियाश्रयत्वं तद्विषयत्वं च युगपत्संभवति । अतो द्रष्टुरात्मनो दृश्यत्वं न युक्तमित्यर्थः । विपक्षे बाधकमाह—दृश्येति । यद्यात्माऽपि दृश्यः स्यात्कुड्यादेरिव तस्य द्रष्टृत्वमपि न स्यादित्यर्थः ॥ ३३ ॥ उक्तं कर्मकर्तृभावविरोधं परिहर्तुं शङ्कते—अंशभेदेनेति । द्रव्यबोधस्वरूपो हि देहातिरिक्त आत्मा तत्र द्रव्यांशेन तस्य दृश्यत्वं बोधांशेन च द्रष्टृत्वं चेति कर्तृत्वकर्मत्वयोर्व्यवस्थितत्वाद्विरोधो नास्तीत्यर्थः । तदेतन्निरस्यति—अंशभेद इति । आत्मनो निरवयवद्रव्यत्वाभ्युपगमादंशभेदकल्पने च सावयवत्वप्रसङ्गात्कुड्यादिवदनात्मत्वमेव तस्य भवेदित्यर्थः । अङ्गीकृत्यापि दूषयति—अंशभेद इति । दृग्विषयो द्रव्यात्मकस्तस्याऽऽत्मनो योंऽशः सोऽयं दृश्यत्वात्कुड्यादिसदृशोऽनात्मा दृशिधात्वर्थाश्रयभूतो योंऽशश्चिदात्मकः स एवाऽऽत्मा । अतो द्रष्टुर्दृश्यत्वं कदाचिन्न संभवतीत्यर्थः । नन्वन्तःकरणादेर्विविक्तं चिन्मात्रमेव ह्यन्तरात्मेति मतम् । तस्य च दृशिधात्वर्थरूपत्वेन तदाश्रयत्वानुपपत्तेर्द्रष्टृत्वं न संभवतीत्याशङ्क्याऽऽह—द्रष्टृंशोऽपीति । कर्तृत्वं नाम क्रियाश्रयत्वम् । क्रिया नाम हस्तपादादिचलनानुगुणप्रयत्नविशेषः स चान्तःकरणधर्मस्तद्विशिष्टान्तःकरणोपाधिसंबन्धवशाद्द्रष्टृंशे चिन्मात्रस्वरूप आत्मन्यपि स्फटिके लौहित्यवत्कर्तृत्वावभासो निगद्यते । अतस्तद्विष-

द्रष्टृंशेऽपि च कर्तृत्वमुपाधिजनितं सदा ।
दृश्याभिव्यक्त्यपेक्षं वा न स्वतः पण्डितोत्तमाः ॥ ३६ ॥
स्वतः कर्तृत्वमस्यापि विद्यते यदि चाऽऽत्मनः ।
तर्हि दर्शनरूपेण परिणामी भवेद्धि सः ॥ ३७ ॥
परिणामी न चाऽऽत्मा स्यात्सर्वथा मृत्तिकादिवत् ।
अचित्त्वं च प्रसज्येत ततश्चिन्न हि विद्यते ॥ ३८ ॥
चिद्विहीनं जडं नैव विभाति मुनिपुङ्गवाः ।
स्वतः प्रकाशहीनस्य प्रकाशो नोपपद्यते ॥ ३९ ॥
चित्प्रकाशात्मसंबन्धादपि चेत्यं न भासते ।
तस्याभावात्ततश्चेत्यप्रतीत्या भिद्यते हि चित् ॥ ४० ॥

---

यात्मकं तद्द्रष्टृत्वमपि तस्मिन्नौपाधिकमित्यर्थः । पक्षान्तरमाह—दृश्याभिव्यक्तीति । दर्शनमात्ररूपस्यापि साक्षिचिदात्मनः क्रियानाश्रयत्वेऽपि दृश्याभिव्यक्तिहेतुत्वेनौपचारिकमेव द्रष्टृत्वं न तु स्वाभाविकमित्यर्थः ॥ ३४—३६॥ विपक्षे बाधकमाह–स्वत इत्यादिना । यद्यात्मनः स्वाभाविकं द्रष्टृत्वं स्यात्तर्हि तद्दर्शनक्रियासंबन्धेन तस्य परिणामित्वं स्यात् "उपयन्नपयन्धर्मो विकरोति हि धर्मिणम्" इति न्यायात् । परिणामिनश्च मृदादिवदनात्मत्वं स्यात् । अनात्मत्वे च घटादिवदेवाचिद्रूपत्वमपि स्यात् । तथा च न किंचिदपि प्रतीयेतेत्यर्थः । प्रतीयते च । विपर्यये पर्यवसानमाह—चिन्न हीति । कोऽप्यर्थो न विद्यते न ज्ञायत इति न हि । अपि तु चिता सर्वमपि ज्ञायते । अतश्चिन्मात्रस्याऽऽत्मनः स्वाभाविककर्तृत्वं न युक्तमित्यर्थः ॥ ३७ ॥ ३८ ॥ अथ तस्याऽऽश्रितप्रतीयमानभेदस्यौपाधिकत्वप्रतिपादनेनैक्यमुपपादयति-चिद्विहीनमित्यादिना । जडं जगत्तावच्चिद्रहितत्वान्नैव भाति । ननु यथा चिच्चिदन्तराभावेऽपि तन्निरपेक्षं भासते तद्वज्जडस्याप्यवभासः किं न स्यादित्यत आह—स्वत इति । स्वभावतः प्रकाशानात्मकस्य जडस्य चिन्नैरपेक्ष्येण प्रकाशो न युक्त इत्यर्थः ॥ ३९ ॥ अथ चित्संबन्धवशाच्चेत्यप्रतीतिमाशङ्क्य निरस्यति—चिदिति । चित्प्रकाशस्य च स्वस्यार्थस्य च विषयविषयिभावादिलक्षणो यः

चिच्चिदेव सदा विप्रा न दृश्यैव हि केन चित्।
या दृग्दृश्यत्वहीना सा सर्वदा भासते खलु ॥ ४१ ॥
सा कदाचिन्न भातीति यदि स्यान्मुनिपुङ्गवाः।
तर्हि नैव विभातीति विभानं केन सिध्यति ॥ ४२ ॥

---

संबन्धस्तस्मादपि चेत्यप्रपञ्चस्यावभासो न युक्तः। तत्र हेतुमाह—तस्याभावादिति। तादृशस्य संबन्धस्यैवानिरूपणाद्विषयविषयिभावलक्षणसंबन्धस्य संबन्धान्तरमूलत्वात्तदनङ्गीकारेऽस्य ज्ञानस्यायमेव विषय इति नियमानुपपत्तेरवश्यं मूलभूतः संबन्धो वक्तव्यः। स च संयोगसमवायतादात्म्यादिलक्षणः। तथा च ज्ञानार्थयोस्तादृशः संबन्धो दुर्निरूप इति विषयविषयिभावोऽपि न युक्त इत्यर्थः। एवं च "सत्यं ज्ञानमनन्तं ब्रह्म" इत्यादि श्रुतेस्त्वनाद्यनन्ता ब्रह्मस्वरूपभूता स्वप्रकाशा या चित्तस्यामनाद्यविद्यावशाच्चेत्यप्रपञ्चोऽध्यस्ततयैव प्रतीयत इत्यवश्यमङ्गीकर्तव्यम्। ततश्चौपाधिक एव चितो नानात्वावभास इत्याह—तत इति। यत एवं ज्ञानार्थयोः परमार्थतः संबन्धाभावस्ततश्चेत्यप्रपञ्चस्य चिद्रूपेऽध्यस्ततयैव प्रतीतिर्वक्तव्या। तथाच जलतरङ्गबुद्बुदादिनानाविधोपाधिसंबन्धवशादेकमेव चन्द्रस्वरूपं यथा भिन्नं प्रतीयते तथा स्वात्मन्यध्यस्तनानाविधचेत्योपाधिसंबन्धवशादधिष्ठानभूता चिदपि भिद्यते। अतश्चितो भेदप्रतीतिश्चेत्यघटपटादिभेदनिबन्धनैव न तु पारमार्थिकीत्यर्थः ॥४०॥ नन्वयं घट इत्यादिज्ञानस्यापि ज्ञातो घट इत्याद्यनुव्यवसायज्ञानवेद्यत्वाच्चेत्यप्रपञ्चवदध्यस्तता किं न स्यादित्यत आह—चिच्चिदेवेति। चेत्यप्रपञ्चस्याधिष्ठानभूता या चित्सा चिदेव सर्वदा प्रकाशमानैव न तु स्वप्रतिबद्धव्यवहारे ज्ञानान्तरमपेक्षते। अतः सा केनचिदपि द्रष्ट्रा न दृश्या यतश्चेत्यप्रपञ्चस्येवाध्यस्तत्वमाशङ्क्येतेत्यर्थः। तदेतदुपपादयति—या दृगिति। दृग्रूपा या चित्साऽवश्यं दृश्यत्वहीना। दृश्यत्वे हि यावत्स्वगोचरज्ञानं नोदेति तावत्पर्यन्तं न प्रतिभासते तदप्रतिभासेन विषयप्रतीतिरपि न स्यादतः सा सर्वदा ज्ञानान्तरनैरपेक्ष्येण भासत इत्यङ्गीकरणीयम्। तथा सति यतः सर्वदा भासतेऽतो दृश्यत्वहीनेत्यर्थः ॥ ४१ ॥ नन्नु दृग्रूपस्य ज्ञानस्य चक्षुरादिसंप्रयुक्तघटविषयवै-

न भातीति विभानं तु न भातमिति चेन्मतम्।
तर्हि भानं हि नाभातं तज्ज्ञानं भानमेव हि॥ ४३॥
भानं भानान्तरेणैव न भाति द्विजपुङ्गवाः।
भानरूपेण भानं तु सदैकं न हि तद्द्वयम्॥ ४४॥

---

शिष्टयेन भासमानस्याऽऽशुतरविनाशित्वेन क्षणान्तरेऽनवस्थानात्तस्य सर्वदा भासनमसिद्धमित्यत आह—सेति। सा दृक्कदाचिद्विषयप्रतीतिदशायां न भातीति यदि स्यात्तर्हि न भातीत्येतदपि केन साधनेन सिध्येत्। न हि चित्प्रकाशमन्तरेण कस्यचित्प्रकाशः संभवति। अतश्चाभावगोचरं स्फुरणं तत्राप्यङ्गीकर्तव्यमित्यर्थः॥ ४२॥ ननु तदानीं न भातीति स्फुरणाभावः प्रतीयते कथं तदा स्फुरणस्य सद्भावो भावाभावयोर्विरोधादिति शङ्कते—न भातीति। घटादिकं वस्तु न भातीत्यज्ञानविषयतयैव ज्ञातं न तु भातमिति ज्ञानविषयतया। अतस्तस्मिन्समये निषिध्यमानस्य भानस्य कथमवस्थितिरित्यर्थः। परिहरति—तर्हीति। न भातीत्यज्ञानविषयतया भातमपि भातमेव न त्वभातम्। तत्र हेतुमाह—तज्ज्ञानमिति। ज्ञानं हि द्विविधं वृत्तिज्ञानं स्वरूपज्ञानं चेति। तत्र ज्ञायतेऽनेनेति ज्ञानमिति करणव्युत्पत्त्या सत्त्वपरिणामरूपचक्षुरादिसंप्रयुक्तविषयाकारान्तःकरणवृत्तिर्वृत्तिज्ञानम्। सविषयस्य तस्य साक्षाद्भासकं स्वरूपज्ञानं च वृत्तिज्ञानेनाविषयीकृतमज्ञाततया। अतस्तस्याज्ञातस्य भानमपि भानमेव। ज्ञाताज्ञातयोरुभयोरपि स्फुरणसाक्षिकत्वादित्यर्थः। अत एवोच्यते 'सर्वं वस्तु ज्ञाततयाऽज्ञाततया वा साक्षिचैतन्यस्य विषय एवेति'॥ ४३॥ अस्य च साक्षिचैतन्यस्फुरणस्य वृत्तिज्ञानतो विशेषमाह—भानमिति। वृत्तिज्ञानं हि जडत्वात्साक्षिचैतन्यरूपेण भानान्तरेणैव भाति। साक्षिरूपं भानं तु नैव भानान्तरेणापि तु स्वयमेव प्रकाशते। प्रकाशमानं हि ज्ञानमर्थस्य भासकं तत्प्रकाशनं च ज्ञानान्तरायत्तं चेत्तत्राप्येवमित्यनवस्था स्यात्ततो ज्ञानस्य ज्ञानान्तरवेद्यत्वं न संभवतीत्यर्थः। सति हि ज्ञानान्तरे तद्वेद्यत्वं ज्ञानस्याऽऽशङ्क्येत तदेव नास्तीत्याह—भानरूपेणेति। घटपटादिदृश्यभेदोपाधिना यादृग्रूपं ज्ञानं विभिन्नं प्रतीयते तदृश्य-

भातं भानं सदा स्वेन भासा भाति न चान्यतः ।
यत्स्वयं भाति तज्ज्ञानं खलु भास्यस्य भासकम् ॥४५॥
अतः सर्वस्य साक्ष्यस्य साक्षिभूतः स्वयंप्रभः ।
आत्मा साक्ष्यगतैर्धर्मैः कर्मभिर्न स बध्यते ॥ ४६ ॥
दृग्रूपं दृश्यसंबद्धमिति वक्तुं न शक्यते ॥ ४७ ॥
संबन्धस्यापि साक्ष्यत्वात्संबन्धो दृश्यवस्तुगः ।

---

संबन्धं परित्यज्य केवलं स्फुरणरूपेण सर्वदैकमेव न तु भिन्नम् । घटपटादिज्ञानेषु स्फुरणमात्रस्याविशेषेण प्रत्यभिज्ञायमानत्वादित्यर्थः ॥ ४४ ॥ एवं भानस्यैकत्वेन तद्गोचरं स्फुरणान्तरं नास्ति चेत्कथं तर्हि तस्य प्रतीतिरित्यत आह—भानमिति । प्रतीयामनं स्फुरणरूपं साक्षिचैतन्यं स्वेनैव भासा भाति न चान्यस्मात्प्रकाशान्तरात् । श्रूयते हि "न तत्र सूर्यो भाति न चन्द्रतारकं नेमा विद्युतो भान्ति कुतोऽयमग्निः । तमेव भान्तमनु भाति सर्वं तस्य भासा सर्वमिदं विभाति" इति । स्वयंप्रकाशमानस्यैव प्रकाशकत्वं लोके प्रसिद्धमिति दर्शयति—यत्स्वयमिति । यत्प्रभादीपादिकं सजातीयप्रकाशान्तरनैरपेक्ष्येण भासते तस्य खलु लोके प्रकाशकत्वं दृष्टम् । अतो ज्ञानं ज्ञानान्तरनैरपेक्ष्येण स्वयंप्रकाशमानमेव सद्भास्यं विषयं प्रकाशयेत् । तस्य ज्ञानान्तरवेद्यत्वेऽनवस्थाप्रसक्तेः । ये तु चक्षुरादिवान्निलीनमेव विज्ञानं विषये ज्ञाततारूपं फलं जनयतीति वर्णयन्ति तैरपि विषयस्फुरणरूपा ज्ञातता स्वप्रकाशत्वेनैष्टव्या । तथा सति सवै चक्षुरादिकरणजन्याऽस्तु कृतमन्तर्गडुना ज्ञानेन ॥ ४५ ॥ एवमद्वितीयस्वप्रकाशचिन्मात्ररूपत्वमात्मनः प्रसाध्य सर्वसाक्षितया साक्ष्याननुप्रविष्टस्य प्रतिज्ञातं साक्ष्यगतकर्मसंबन्धाभावं निगमयति–अत इति॥४६॥ दृग्रूपस्य तस्य पुनरपि कर्मसंबन्धमाशङ्क्य निरस्यति—दृगिति । दृश्यसंबन्धापेक्षो हि तथाविधस्याऽऽत्मनो दृग्व्यपदेशः । तथा तत्कर्मापि हि दृश्यमिति तेन सह दृग्रूपस्य संबन्धोऽवश्यं भावीति न शक्यते वक्तुम् । संबन्धिद्वयघटितो हि धर्मः संबन्धस्तस्य च दृग्रूपत्वे दृग्रूपसंबन्धिनोऽनतिरिक्तत्वात्संबन्धत्वमेव हीयते । दृश्यरूपत्वेऽपि दृश्यलक्षणसंबन्धिकोटिनिक्षिप्तत्वात्संबन्धित्वमेव

दृश्यभूतस्य रज्ज्वादेः खलु दृष्टस्तु संगमः ॥४८ ॥
असङ्गो ह्ययमित्येवं ब्रवीति च परा श्रुतिः ।
तस्मादात्मा तु चिद्रूपः कर्मभिर्न स बध्यते ॥ ४९ ॥
चिद्रूपस्याऽऽत्मनः साक्षाद्ब्रह्मतामाह हि श्रुतिः।
ब्रह्मणः कर्मसंबन्धाभावं चाऽऽह परा श्रुतिः ॥ ५० ॥
तथा सति कथं सोऽयं कर्मभिर्बध्यते बुधाः ।
तस्मादात्मा स्वमोहेन संसारीव प्रकाशितः ॥ ५१ ॥
वर्णाश्रमवयोवस्थाविशेषानात्मविभ्रमात् ।
अध्यस्याशेषवेदानां नियोज्यः स्यान्न च स्वतः ॥ ५२ ॥

---

न तु संबन्धरूपतेत्यर्थः । दृश्यस्य च दृशा सह संबन्धाभावः सुप्रसिद्ध इति दर्शयति—दृश्यभूतस्येति । यथा रज्ज्वादेर्दृश्यस्य दृशा सह परमार्थतः संबन्धो नास्ति । अध्यस्ततयैव प्रतीतिरिति प्राक्प्रतिपादितत्वात् ॥४७॥४८॥ उक्तेऽर्थे श्रुतिं संवादयति—असङ्ग इति । सा च श्रुतिः—"असङ्गो ह्ययं पुरुषः" "असङ्गो न हि सज्जते" इत्यादिका । दृग्दृश्ययोर्वास्तवसंबन्धाभावादित्यर्थः ॥ ४९ ॥ एवं प्रत्यगात्मनः साक्षिचिन्मात्ररूपतया कर्मसंबन्धाभावमभिधाय ब्रह्माभिन्नतयाऽपि तत्प्रतिपादयितुं ब्रह्मणः कर्मसंबन्धराहित्यं श्रुतिप्रसिद्धमिति दर्शयति—ब्रह्मण इति । श्रूयते हि—"स न साधुना कर्मणा भूयान्नो एवासाधुना कनीयान्न कर्मणा वर्धते नो कनीयान्" इति ॥ ५० ॥ सोऽयमिति । पुण्यपापसंस्पर्शवैधुर्येण श्रुत्या प्रतिपादितो यः परमात्मा स एवायं साक्षिरूपेणावस्थित आत्मेति तत्त्वमस्यादिवाक्यैस्तत्तादात्म्येन प्रतिपादित इत्यर्थः । यद्येवमात्मनः कर्मसंबन्धो नास्ति तर्हि कथं तस्य संसारित्वप्रतीतिरित्यत आह—तस्मादिति । स्वमोहेनेति । स्वस्याऽऽत्मनः पारमार्थिकाद्वितीयस्वप्रकाशचिन्मात्ररूपत्वापरिज्ञानेनेत्यर्थः ॥५१॥ वर्णाश्रमेति । स्थूलदेहादितादात्म्याध्यासनिबन्धन एवाऽऽत्मनि ब्राह्मणत्वगृहस्थत्वलक्षणवर्णाश्रमादिसकलविशेषावभासः । अध्यस्येति । ब्राह्मणत्वाद्यध्यासादित्यर्थः । अशेषवेदाना-

अज्ञानादन्यथा ज्ञानं मनुष्यत्वादिमानयम् ।
आत्मा तु परमात्माऽपि कर्मभिर्बध्यतेऽवशः ॥ ५३ ॥
कर्मभिर्व्यवहारे तु बद्धोऽपि स्वीयमायया ।
वस्तुतः परमात्माऽयं खलु तैर्न निबध्यते ॥ ५४ ॥
स्वात्मनः सर्वसाक्षित्वं देहादेर्व्यतिरिक्तताम् ।
ब्रह्मत्वं च श्रुतेर्ज्ञात्वा कर्मभिर्न हि बध्यते ॥ ५५ ॥
सर्वसाक्षिणमात्मानं वर्णाश्रमविवर्जितम् ।
ब्रह्मरूपतया पश्यन्मुच्यते भवबन्धनात् ॥ ५६ ॥
अतः स्वात्मापरिज्ञानाद्देहेऽहंभावमाश्रितः ।

मिति । 'ब्राह्मणो बृहस्पतिसवेनयजेत राजा राजसूयेन यजेत इत्यादीनामित्यर्थः॥ ५२॥ अज्ञानादन्यथा ज्ञानमिति । अविद्या हि द्विविधा । विक्षेपशक्तिरावरणशक्तिश्चेति । तत्राऽऽवरणशक्त्या नीलपृष्ठत्रिकोणत्वादिवदात्मनो विशेषरूपस्य ब्रह्मात्मत्वस्याऽऽवरणात् । विक्षेपशक्त्या रजतादिवन्मिथ्याभूतस्य मनुष्यत्वादेरुपस्थापनाच्चेत्यर्थः । अवश इति । देहादितादात्म्याभिमानवतस्तत्कृतपुण्यपापपारवश्यमेव न तु स्वातन्त्र्यमित्यर्थः ॥ ५३ ॥ परमात्मनोऽपि जीवभावापन्नस्योक्तरीत्या कर्मपारवश्यं चेत्कृतमात्मनः परमात्मत्वज्ञानेनेत्यत आह—कर्मभिरिति । व्यवहारदशायां स्वात्मनः कर्मसंबन्धं मायामयत्वेन साक्षात्कुर्वतः परमात्मनो वास्तवो बन्धलेशोऽपि नास्तीत्यर्थः ॥ ५४ ॥ कथं तर्ह्यज्ञानाज्जीवभावमापन्नस्य तस्य कर्मपारवश्यनिरास इति तत्राऽह—स्वात्मन इति । प्रत्यगात्मनो देहादिव्यतिरिक्तत्वं साक्षिचिन्मात्ररूपत्वमुक्तयुक्तिभिर्निश्चित्य तस्य ब्रह्मरूपत्वमहं ब्रह्मास्मीत्यादि श्रुतिमुखाद्गुरूपदेशेन ज्ञात्वेत्यर्थः । परोक्षस्य ब्रह्मात्मज्ञानस्यापरोक्षसंसारभ्रमनिवर्तकत्वाभावेऽपि कर्मबन्धनिवर्तकत्वं प्राक्प्रतिपादितम्—" परोक्षं ब्रह्मविज्ञानं शाब्दं देशिकपूर्वकम् " इत्यादिना ॥५५॥ पश्यन्निति । यस्तूदीरितं ब्रह्मात्मत्वं मननिदिध्यासनाभ्यामसंभावनाविपरीतभावनानिरासेन साक्षात्करोति स तु साक्षात्कारसमय एव कारणभूतस्या-

करोति सर्वशास्त्रोक्तं न ज्ञानी न हि संशयः ॥ ५७ ॥
ईदृशी परमा विद्या शांकरी भवनाशिनी ।
प्रसदादेव जन्तूनां शक्तेरेव हि जायते ॥ ५८ ॥
वागुद्भूता परा शक्तिर्या चिद्रूपा पराभिधा ।
वन्दे तामनिशं भक्त्या श्रीकण्ठार्धशरीरिणीम् ॥ ५९ ॥
इच्छासंज्ञा च या शक्तिः परिपूर्णाशिवोदरा ।
वन्दे तामादरेणैव ममेष्टफलदायिनीम् ॥ ६० ॥

---

ज्ञानस्य निवृत्तेस्तत्कार्यभूतात्संसारबन्धादपि तदैव मुक्तो भवतीत्यर्थः ॥ ५६॥ एवं ब्रह्मात्मत्वज्ञानमतः कर्मसंबन्धाभावात्कर्मकाण्डविहितमग्निहोत्रादिकं सर्वं देहादितादात्म्याध्यासवत एवेत्युपसंहरति—अत इति ॥ ॥ ५७ ॥ शक्तेरेव हीति । एवकारोऽन्ययोगव्यावृत्त्यर्थः । संविद्रूपिण्याः परशक्तेरेव नान्यस्या देवताया इत्यर्थः । प्रसादादेवेत्येवकारस्त्वयोगव्यावृत्तिपरः । शक्तेः प्रसदे सत्येव परविद्योत्पत्तिर्नासतीत्यर्थः । शक्तिप्रसादाद्ब्रह्मत्वलाभश्च तलवकारोपनिषद्याम्नायते—" तस्मिन्नेवाऽऽकाशे स्त्रियमाजगाम बहुशोभमानामुमां हैमवतीं तां होवाच किमेतद्यक्षमिति ब्रह्मेति होवाच " इति ॥ ५८ ॥ अतस्तत्प्रसादहेतुभूतं स्तोत्रमारभते—वागित्यादिना । या संविद्रूपिणी परमा शक्तिः सैव शब्दरूपेण विवर्तमाना प्रथमं पराख्याऽऽविर्भूता बिन्दुस्फोटनोद्भूतात्सर्वत्रासावनुस्यूतशब्दः प्राणिनामर्थविविक्षाहेतुकप्रयत्नजनितपवनसंबन्धहेतूनां मूलाधारेऽभिव्यक्तो निष्पन्दः परा वागित्युच्यते । उक्तं ह्याचार्यैः—"मूलाधारात्प्रथममुदितो यस्तु भावः पराख्यः" इति । तां विशिनष्टि—श्रीकण्ठेति । श्रीकण्ठादिन्यासे ह्यकारमूर्तिः श्रीकण्ठः । अकारस्य सर्ववागात्मकत्वम् । 'अकारो वै सर्वा वाक्सैषा स्पर्शोष्मभिर्व्यज्यमाना बह्वी नानारूपा भवति' इत्यादि श्रुतेः । परा वाग्रूपा वा शक्तिः सा वैखरीरूपया सकलफलात्मिकाऽतः सा सर्ववागात्मकत्वसाम्याच्छ्रीकण्ठस्य शक्तिभूतेत्यर्थः ॥ ५९ ॥ इच्छासंज्ञेति । सैव परा शक्तिरिष्यमाणसकलजगल्लक्षणशक्त्या विशेषनिरूपिता सतीच्छाशक्तिरित्युच्यते । सा विशेष्यते परिपूर्णेति । परिपूर्णेनाप्यनन्ताशिवस-

शक्तिर्या परमा साक्षाद्बीजभूताऽखिलस्य च।
वन्दे तामनिशं भक्त्या नकुलीशशिवान्विताम् ॥ ६१ ॥
ऊर्ध्वरूपाऽप्यधोरूपा तथाऽधस्थाऽपि मध्यगा।
मध्यरूपाऽपि चान्तःस्था या तां वन्दे वरप्रदाम् ॥६२॥
विन्यासैर्वर्णसंक्लृप्तैर्विश्वविद्यालयात्मना।
विद्योतमाना या वाचि वन्दे तामादरेण तु ॥ ६३ ॥

त्यज्ञानादिलक्षणेन तेन सहितमुदरं यस्याः सा तथोक्ता। जपाकुसुमरागेण स्फटिकवत्स्वप्रकाशपरशिवचैतन्येन व्याप्तेत्यर्थः। एवं ह्यकारस्य श्रीकण्ठादिन्यासे शक्तिमूर्तिः 'पूर्णोदरि च विरजा तृतीया शाल्मली तथा' इत्याचार्यैरुक्तत्वात्। यतः इयमिच्छाशक्तिरतः स्तोतुरिष्टं फलं दातुं शक्तेत्यर्थः ॥ ६० ॥ बीजभूतेति। ग्रस्तसमस्तप्रपञ्चा पुनरुत्पत्स्यमानस्य सर्वस्य जगतः साक्षाद्बीजतया परमा चिच्छक्तिस्तामिति संबन्धः। नकुलीशशिवान्वितामिति। श्रीकण्ठादिन्यासे नकुलीशो नाम हकारमूर्त्याकारात्मनाऽवस्थितेन नकुलीशाख्येन शिवेन सहिता विश्वजननसमर्था बीजात्मिका संविद्रूपिणी शक्तिर्हकारवाच्या प्रकृतिः 'अथ संज्ञा भवेद्व्याप्य विश्वम्' इत्याचार्यैरुक्तत्वात्। अतो हकाररूपेण नकुलीशशिवेन वाच्यवाचकभावेन संबद्धामित्यर्थः ॥६१॥ ऊर्ध्वरूपेति ऊर्ध्वं कार्यप्रपञ्चस्योपरि प्रध्वंसस्योत्तरकाले वर्तमानं ग्रस्तसमस्तप्रपञ्चात्मनो रूपं यस्याः सा तथोक्ता एवमूर्ध्वरूपाप्यधोरूपा कार्यप्रपञ्चस्याधस्तादुत्पत्तिकाले वर्तमानं तज्जननसमर्थकारणात्मकं रूपं यस्याः सा तथोक्ता। एवं कारणतया तथाऽधःस्थाऽपि कार्यप्रपञ्चस्याधस्थाद्वर्तमानाऽपि सैव मध्यगा प्रपञ्चस्य प्रागभावप्रध्वंसयोर्मध्यकालेऽपि व्याप्य वर्तमानाया एव चिच्छक्तेः कालत्रयव्याप्तिर्दर्शिता। अन्तस्थेति। कालव्याप्त्या मध्यरूपाऽपि कार्यप्रपञ्चस्यान्तस्थोपादानकारणरूपेणान्तर्वर्तमाना। यद्वा स्थावरजङ्गमात्मके स्वसृष्टे जगति स्वात्मकत्वतयाऽन्तरनुप्रविश्य स्थिता। श्रूयते हि—'तत्सृष्ट्वा तदेवानुप्राविशत्' इति ॥ ६२ ॥ अत्र चोर्ध्वरूपाया अधोरूपत्वमधोरूपायास्तु मध्यरूपत्वं मध्यमाया अन्तरवस्थानं च प्रतीत्यैतद्विरुद्धं तादृशाविरोधाभावं दर्शयति—विन्या-

एकधा च द्विधा चैव तथा षोडशधा स्थिता।
द्वात्रिंशद्भेदभिन्ना च या तां वन्दे परात्मदाम् ॥ ६४ ॥
अकारादिक्षकारान्तैर्वर्णैरत्यन्तनिर्मलैः ।
अशेषशब्दैर्या भाति तामानन्दप्रदां नुमः ॥ ६५ ॥
लक्ष्मीवागादिरूपेण नर्तकीव विभाति या ।
तामाद्यन्तविनिर्मुक्तामहं वन्दे वराननाम् ॥ ६६ ॥

---

सैरिति । अकारादिहकारान्तवर्णपरिकल्पितैर्विन्यासैर्गद्यपद्यादिसंस्थानविशेषैः सकलविद्याश्रयतया शब्दे या विद्योतमाना तामित्यर्थः ॥ ६३ ॥ एकधा चेति । एकेनैव प्रकारेण ताल्वोष्ठपुटाभिव्यक्तवैखरिवागात्मना प्रथममवस्थिता । पुनः स्वरव्यञ्जनभेदेन द्विप्रकारं विभज्य स्थिता । पुनश्च षोडशधाऽकारादिविसर्गान्तषोडशस्वरूपेण विभज्य स्थिता । पुनरपि द्वात्रिंशद्भेदभिन्ना काद्याः पञ्चविंशतिर्यादयोऽष्टौ रलयोरभेदाल्लकारो न पृथग्गणनीयः । क्षकारश्च संयुक्ताक्षरतया न पृथग्भूतः । हकारोऽपि मूलप्रकृतिवाचकतया सकलजगन्मूलत्वेनावस्थितो व्यष्टिरूपेण गणनां नार्हति । अत एवोक्तं नकुलीशशिवान्वितामिति । अतो यादयः सप्तावशिष्यन्ते । तथा चायमर्थः—ककारादिसकारान्तद्वात्रिंशद्व्यञ्जनात्मना विभज्यावस्थिता । इत्थं मातृकारूपेणावस्थिता या परमा शक्तिस्तामित्यर्थः ॥ ६४ ॥ अकारादीति । उक्तभेदेन भिन्नायाः शक्तेरवयवभूता अकारादिक्षकारान्ता वर्णास्ते चात्यन्तनिर्मलाः । अमृतमयत्वात् । आधारादिषट्कमलदलेषु पातिता द्वादशान्तस्थितचन्द्रमण्डलात्सृता अमृतबिन्दवोऽकारादिक्षकारान्तवर्णात्मना परिणताः । उक्तं ह्याचार्यैः—मूलाधारात्स्फुरिततडिदाभाप्रभा सूक्ष्मरूपोद्गच्छन्त्यामस्तकमणुतरा तेजसां मूलभूता ॥ सौषुम्नाध्वाचरणनिपुणा सा सवित्राऽनुबद्धा ध्याता सद्योऽमृतमथ रवेः स्रावयेत्सार्धसोमात्" । "शिरसि निपतिता या बिन्दुधारा सुधारा भवति लिपिमयी सा ताभिरङ्गं मुखाद्यम्" इति । तथाविधैर्निर्मलैर्वर्णैस्तत्संस्थानभेदपदवाक्यात्मनाऽवस्थितैः शब्दैर्या शक्तिर्मातृकात्मिका भाति तामित्यर्थः॥६५॥ नर्तकीवेति । यथा नर्तकी स्वयमेकैव सत्याहार्यनानाविधरूपेण नानाविधा

ब्रह्माद्याः स्थावरान्ताश्च यस्या एव समुद्गताः ।
यस्यामेव विलीयन्ते तस्यै नित्यं नमो नमः ॥ ६७ ॥
महदादिविशेषान्तं जगद्यस्याः समुद्गतम् ।
यस्यामेव लयं याति वन्दे तामम्बिकामहम् ॥ ६८ ॥
गुरुमूर्तिधरां गुह्यां गुह्यविज्ञानदायिनीम् ।
गुह्यभक्तजनप्रीतां गुहायां निहितां नुमः ॥ ६९ ॥
य इदं पठते स्तोत्रं संध्ययोरुभयोरपि ।
सर्वविद्यालयो भूत्वा स याति परमां गतिम् ॥ ७० ॥
इति जनहितमेतत्प्रोच्य देव्याः प्रसादा-
द्गुरुगुरुमखिलेशं भक्तिपूर्वं प्रणम्य ।
मुनिगणमवलोक्य स्वानुभूत्यैव सूतः
स्वकपरशिवरूपे लीनबुद्धिर्बभूव ॥ ७१ ॥

---

भात्येवमेकैव परा शक्तिः परिकल्पितभेदाल्लक्ष्मीवागादिनानाशक्त्यात्मना भाती-त्यर्थः । आद्यन्तविनिर्मुक्तामिति । आदिरुत्पत्तिरन्तो विनाशस्तदुभयनिर्मुक्तां सर्वदा वर्तमानामित्यर्थः ॥ ६६ ॥ ब्रह्माद्या इति । ब्रह्मादिस्तम्बान्तो यो भोक्तृप्रपञ्चस्तस्य सर्वस्योत्पत्तिस्थितिलया यस्याः स्वरूपे परिकल्प्यन्ते तस्यै इत्यर्थः । श्रूयते हि—"यतो वा इमानि भूतानि जायन्ते । येन जातानि जीवन्ति । यत्प्रयन्त्यभिसंविशन्ति" इति ॥ ६७ ॥ न केवलमेत्र भोक्तृप्रप-ञ्चस्याधिष्ठानं भोग्यप्रपञ्चपरिकल्पनस्यापि सैवाधिष्ठानमित्याह—महदादीति । मूलप्रकृतेरत्यन्तानिर्विकल्पकतया चिच्छक्तितादात्म्येन क्षीरनीरवदविभागापन्न-त्वान्महत्तत्त्वस्य च प्रथमकार्यत्वात्तदेवाऽऽदित्वेनोपादीयते । महदहङ्कारादिघ-टपटादिविशेषान्तं भोग्यरूपं जगदस्याः परशक्तेः समुद्भूतं समुद्भूयावस्थित-मित्यर्थः ॥ ६८ ॥ गुरुमूर्तिधरामिति । शमदमादिसाधनसंपन्नविरक्तजनाननु-ग्रहीतुं गुरुमूर्तिरूपेणावस्थिताम् । गुह्यां रहस्यां दुरधिगमामित्यर्थः । गुह्यं

इति श्रीस्कान्दपुराणे सूतसंहितायां चतुर्थे यज्ञ-
वैभवखण्डे अवशिष्टपापस्वरूपकथनं नाम
सप्तचत्वारिंशोऽध्यायः ॥ ४७ ॥

---

रहस्यमद्वितीयब्रह्मात्मैकत्वविषयं वेदान्तश्रवणमननादिसाधनजनितं यत्सम्यग्ज्ञानं तद्दातुं शीलं यस्याः सा तथोक्ता । गुहायां निहितामिति । देहमध्येऽवस्थितहृदयकमलमध्यं गुहा तस्यां निहिताम् । तत्र विशेषतोऽभिव्यक्तामित्यर्थः । श्रूयते हि—"यो वेद निहितं गुहायां परमे व्योमन्" इति ॥६९—७१॥

इति श्रीमत्काशीविलासाक्रियाशक्तिपरमभक्तश्रीमत्त्र्यम्बकपादाब्जसेवापरा-
यणेनोपनिषन्मार्गप्रवर्तकेन श्रीमाधवाचार्येण विरचितायां सूत-
संहितातात्पर्यदीपिकायां चतुर्थे यज्ञवैभवखण्डेऽवशिष्टपाप-
स्वरूपकथनं नाम सप्तचत्वारिंशोऽध्यायः ॥ ४७ ॥

समाप्तोऽयं यज्ञवैभवखण्डस्य पूर्वो भागः ॥

ॐ तत्सत् ॥



श्रीः

सव्याख्यायां सूतसंहितायां यज्ञवैभवखण्डस्योपरिभागे

## ब्रह्मगीताप्रारम्भः ।

## तत्र प्रथमोऽध्यायः ।

१. ब्रह्मगीतिः ।

मुनय ऊचुः—

भवता सर्वमाख्यातं संक्षेपाद्विस्तरादपि ।
इदानीं श्रोतुमिच्छामो ब्रह्मगीतामनुत्तमाम् ॥ १ ॥
सर्वविज्ञानरत्नानामाकरस्य महात्मनः ।
कृष्णद्वैपायनस्यैव भवाञ्शिष्यः सुशिक्षितः ॥ २ ॥
त्वयैवाविदितं किंचिन्नास्ति सत्यं प्रभाषितम् ।
यदि प्रसन्नो भगवांस्तन्नो वक्तुमिहार्हसि ॥ ३ ॥

सूत उवाच—

वक्ष्ये तामादरेणैव ब्रह्मगीतामनुत्तमाम् ।
श्रद्धया सहिता यूयं शृणुत ब्रह्मवित्तमाः ॥ ४ ॥
पुरा कल्पान्तरे देवाः सर्वे संभूय सादरम् ।
विचार्य सुचिरं कालं वेदानामर्थमुत्तमम् ॥ ५ ॥

---

नमः श्रीशंकरानन्दगुरुपादाम्बुजन्मने । सविलासमहामोहग्राहग्रासैककर्मणे ॥ एवमुपनिषदेकसमधिगम्यब्रह्मात्मैकत्वविज्ञानस्य निःश्रेयससाधनत्वमुक्तम् । एतच्च सर्वशाखासंमतामिति दर्शयितुमैतरेयतैत्तिरीयकादिसमस्तोपनिषदर्थस्य साकल्येन प्रतिपादिकां ब्रह्मगीतां वक्तुं मुनीनां प्रश्नमवतारयति—भवतेति ॥ १—४ ॥ अथ तां वक्तुं पुरावृत्तमुदाहरति—पुरेति ॥ ५ ॥ ६ ॥

संशयाविष्टचित्तास्तु तपस्तप्त्वा महत्तरम् ।
अभिजग्मुर्विधातारं प्रष्टुं देवा मुनीश्वराः ॥ ६ ॥
यत्राऽऽस्ते जगतां नाथः सर्वज्ञः सर्ववित्प्रभुः ।
महाकारुणिकः श्रीमान्ब्रह्मा भक्तहिते रतः ॥ ७ ॥
मेरुशृङ्गे वरे रम्ये सर्वयोगिसमावृते ।
यक्षराक्षसगन्धर्वसिद्धाद्यैश्च सुसेविते ॥ ८ ॥
नानारत्नसमाकीर्णे नानाधातुविचित्रिते ।
शकुन्तसंघसंघुष्टे नानातीर्थसमावृते ॥ ९ ॥
गुहाकोटिसमायुक्ते गिरिप्रस्रवणैर्युते ।
मधुरादिरसैः षड्भिः समृद्धेऽतीव शोभने ॥ १० ॥
तत्र ब्रह्मवनं नाम शतयोजनमायतम् ।
शतयोजनविस्तीर्णं दीर्घिकाभिः सुसंयुतम् ॥ ११ ॥
नानापक्षिसमायुक्तं नानामृगसमाकुलम् ।
स्वादुपानीयसंयुक्तं फलमूलैश्च संयुतम् ॥ १२ ॥
भ्रमद्भ्रमरसंछन्नसुगन्धकुसुमद्रुमम् ।
मन्दानिलसमायुक्तं मन्दातपसमायुतम् ॥ १३ ॥
निशाकरकरैर्युक्तं वनमस्ति महत्तरम् ।
तत्र जाम्बूनदमयं तरुणादित्यसंनिभम् ॥ १४ ॥

---

सर्वज्ञः सर्वविदिति । सामान्यतः सर्वं जानातीति सर्वज्ञः । विशेषेणापि सर्वं वेत्तीति सर्ववित् । यद्वा सर्वश्चासौ ज्ञश्चेति सर्वज्ञः । सर्वजगदात्मकश्चिदेकरसशरीर इत्यर्थः । एवंरूपः परशिव एव हि रजोगुणोपहितः सन्निखिलजगत्सर्जनाय ब्रह्मा भवति । परशिवस्य चैवंरूपत्वमाम्नायते—"यः सर्वज्ञः

नवप्राकारसंयुक्तमशीतिद्वारसंयुतम् ।
महाबलसमोपेतैर्द्वारपालैश्च कोटिभिः ॥ १५ ॥
खड्गतोमरचापादिशस्त्रयुक्तैश्च रक्षितम् ।
पुष्पप्रकरसंकीर्णं पूर्णकुम्भैश्च संयुतम् ॥ १६ ॥
ज्वलद्दीपैः समायुक्तं पुष्पमालाविराजितम् ।
विचित्रचित्रसंयुक्तभित्तिकोटिसुशोभितम् ॥ १७ ॥
मुक्तादामसमायुक्तं वितानैर्मौक्तिकैर्युतम् ।
अभ्रगामिध्वजैर्युक्तं प्रांशुतोरणसंयुतम् ॥ १८ ॥
नृत्यगीतादिभिर्युक्तमप्सरोगणसेवितम् ।
नानाविधमहावाद्यैर्नानातालैश्च संयुतम् ॥ १९ ॥
मृदुमध्योग्रशब्दाढ्यं नानाकाहलसंयुतम् ।
वेदघोषसमायुक्तं स्मृतिघोषसमन्वितम् ॥ २० ॥
पुराणघोषसंयुक्तमितिहासरवान्वितम् ।
सर्वविद्यारवैर्युक्तं सर्वज्ञैश्च समावृतम् ॥ २१ ॥
अगाधजलपर्यन्तमवरोधसमन्वितम् ।
रथकोटिसमायुक्तं कोटिकोटिगजावृतम् ॥ २२ ॥
कोटिकोटिसहस्रैश्च महाश्वैश्च विराजितम् ।
अस्त्रशस्त्रादिसंयुक्तैरसंख्यातबलान्वितैः ॥ २३ ॥
असंख्यातैर्भटैर्नित्यं रक्षितं पुरमुत्तमम् ।
अस्ति पुण्यवतां प्राप्यमप्राप्यं पापकर्मणाम् ॥ २४ ॥
तस्मिन्नन्तःपुरे शुद्धे सहस्रस्थूणसंयुते ।
सर्वलक्षणसंयुक्ते सर्वालंकारसंयुते ॥ २५ ॥

मृगतोरणसंयुक्ते कल्पवृक्षसमन्विते ।
कण्ठीरवमुखैर्युक्ते षट्पदस्वनसंयुते ॥ २६ ॥
मृदुतल्पसमोपेते रत्ननिर्मितमण्डपे ।
देव्या चापि सरस्वत्या वर्णविग्रहया सह ॥ २७ ॥
सर्वशब्दार्थभूतस्तु ब्रह्मा निवसति प्रभुः ।
तत्र देवा द्विजा गत्वा ददृशुर्लोकनायकम् ॥ २८ ॥
नानारत्नसमोपेतविचित्रमुकुटोज्ज्वलम् ।
रत्नकुण्डलसंयुक्तं प्रसन्नवदनं शुभम् ॥ २९ ॥
नानारत्नसमोपेतहाराभरणभूषितम् ।
महार्हमणिसंयुक्तकेयूरकरसंयुतम् ॥ ३० ॥
विचित्रकटकोपेतमङ्गुलीयकशोभितम् ।
उत्तरीयकसंयुक्तं शुक्लयज्ञोपवीतिनम् ॥ ३१ ॥
नानारत्नसमोपेतं तुन्दबन्धविराजितम् ।
चन्दनागरुकर्पूरक्षोददिग्धतनूरुहम् ॥ ३२ ॥
सुगन्धकुसुमोत्पन्ननानामालाविभूषितम् ।
शुक्लवस्त्रपरीधानं तप्तजाम्बूनदप्रभम् ॥ ३३ ॥
स्वभासा सकलं नित्यं भासयन्तं परात्परम् ।
सुरासुरमुनीन्द्रैश्च वन्द्यमानपदाम्बुजम् ॥ ३४ ॥
तं दृष्ट्वा सर्वकर्तारं साक्षिणं तमसः परम् ।
महाप्रीतिसमोपेताः प्रसन्नवदनेक्षणाः ॥ ३५ ॥
संजातपुलकैर्युक्ता विवशा गद्गदस्वराः ।

---

सर्वविद्यस्य ज्ञानमयं तपः" इति ॥ ७—३५ ॥ निर्मलावृतामिति । निर्मलैः

प्रकाशितसुखाब्ध्यन्तर्निमग्ना निर्मलीवृतम् ॥ ३६ ॥
निरस्तनिखिलध्वान्ताः प्रणम्य वसुधातले ।
शिरस्यञ्जलिमाधाय सर्वे देवाः समाहिताः ॥ ३७ ॥
तुष्टुवुर्हृष्टमीशानं सर्वलोकपितामहम् ।
मुक्तिदं पुण्यनिष्ठानां दुःखदं पापकर्मिणाम् ॥ ३८ ॥

देवा ऊचुः—

ब्रह्मणे ब्रह्मविज्ञानदुग्धोदधिविधायिने ।
ब्रह्मतत्त्वदिदृक्षूणां ब्रह्मदाय नमो नमः ॥ ३९ ॥
कष्टसंसारमग्नानां संसारोत्तारहेतवे ।
साक्षिणे सर्वभूतानां साक्ष्यहीनाय वै नमः ॥ ४० ॥
सर्वधात्रे विधात्रे च सर्वद्वंद्वापहारिणे ।
सर्वावस्थासु सर्वेषां साक्षिणे वै नमो नमः ॥ ४१ ॥
परात्परविहीनाय पराय परमेष्ठिने ।
परिज्ञानवतामात्मस्वरूपाय नमो नमः ॥ ४२ ॥
पद्मजाय पवित्राय पद्मनाभसुताय च ।

---

सनकादिदिव्ययोगिभिः परिवृतामित्यर्थः॥ ३६—३८ ॥ ब्रह्मतत्त्वेति। ब्रह्मणः पारमार्थिकं निष्प्रपञ्चसच्चिदानन्दाखण्डैकरसरूपं साक्षात्कर्तुमिच्छतां मुमुक्षूणां प्रत्यगात्मन उक्तलक्षणब्रह्मरूपबोधकायेत्यर्थः ॥ ३९ ॥ साक्षिण इति । सर्वदा सर्ववस्तूनां साक्षिणे साक्ष्याननुप्रविष्टेन स्वरूपचैतन्येन भासकायेत्यर्थः। साक्ष्यहीनायेति । परमार्थोपाधावज्ञानतत्कार्यस्य साक्ष्यस्याभावात्तद्विहीनः॥४०॥ सर्वधात्र इति । सर्वस्य जगतो धारयित्रे । विधात्रे निर्मात्र इत्यर्थः । सर्वावस्थास्विति । सर्वेषां प्राणिनां जाग्रदादिसर्वावस्थासु साक्षिचैतन्यरूपेणावस्थितायेत्यर्थः ॥ ४१ ॥ परात्परविहीनायेति । महदादिभूतभौतिकादिकार्या-

पद्मपुष्पेण पूज्याय नमः पद्मधराय च ॥ ४३ ॥
सुरज्येष्ठाय सूर्यादिदेवतातृप्तिकारिणे ।
सुरासुरनरादीनां सुखदाय नमो नमः ॥ ४४ ॥
वेधसे विश्वनेत्राय विशुद्धज्ञानरूपिणे ।
वेदवेद्याय वेदान्तनिधये वै नमो नमः ॥ ४५ ॥
विधये विधिहीनाय विधिवाक्यविधायिने ।
विध्युक्तकर्मनिष्ठानां नमो विद्याप्रदायिने ॥ ४६ ॥
विरिञ्चाय विशिष्टाय विशिष्टार्तिहराय च ।
विषण्णानां विषादाब्धिविनाशाय नमो नमः ॥ ४७ ॥
नमो हिरण्यगर्भाय हिरण्यगिरिवर्तिने ।
हिरण्यदानलभ्याय हिरण्यातिप्रियाय च ॥ ४८ ॥
शतानन्दाय शान्ताय शांकरज्ञानदायिने ।
शमादिसहितस्यैव ज्ञानदाय नमो नमः ॥ ४९ ॥
शंभवे शंभुभक्तानां शंकराय शरीरिणाम् ।
शांकरज्ञानहीनानां शत्रवे वै नमो नमः ॥ ५० ॥
नमः स्वयंभुवे नित्यं स्वयंभुब्रह्मदायिने ।
स्वयं ब्रह्मस्वरूपाय स्वतन्त्राय परात्मने ॥ ५१ ॥
द्रुहिणाय दुराचारनिरतस्य दुरात्मनः ।
दुःखदायान्यजन्तूनामात्मदाय नमो नमः ॥ ५२ ॥

---

पेक्षया परं तस्मादपि परमव्यक्तं मायापरपर्यायं तद्रहितायेत्यर्थः ॥४२—४४॥ विश्वनेत्रायेति । विश्वस्य सर्वस्य नेत्रवत्प्रकाशकायेत्यर्थः ॥ ४५ ॥ विधिहीनायेति । विधिर्विधाताऽन्यो यस्य नास्ति स तथोक्तः ॥ ४६—४८ ॥ शता-

वन्द्यहीनाय वन्द्याय वरदाय परस्य च ।
वरिष्ठाय वरिष्ठानां चतुर्वक्त्राय वै नमः ॥ ५३ ॥
प्रजापतिसमाख्याय प्रजानां पतये नमः ।
प्राजापत्यविरक्तस्य नमः प्रज्ञाप्रदायिने ॥ ५४ ॥
पितामहाय पित्रादिकल्पनारहिताय च ।
पिशुनागम्यदेहाय पेशलाय नमो नमः ॥ ५५ ॥
जगत्कर्त्रे जगद्गोप्त्रे जगद्धन्त्रे परात्मने ।
जगदृश्यविहीनाय चिन्मात्रज्योतिषे नमः ॥ ५६ ॥
विश्वोत्तीर्णाय विश्वाय विश्वहीनाय साक्षिणे ।
स्वप्रकाशैकमानाय नमः पूर्णपरात्मने ॥ ५७ ॥
स्तुत्याय स्तुतिहीनाय स्तोत्ररूपाय तत्त्वतः ।
स्तोतृणामपि सर्वेषां सुखदाय नमो नमः ॥ ५८ ॥

सूत उवाच—

एवं ब्रह्माणमादित्याः स्तुत्वा भक्तिपुरःसरम् ।
पृष्टवन्तस्तु सर्वेषां वेदानामर्थमादरात् ॥ ५९ ॥
ब्रह्माऽपि ब्रह्मविन्मुख्याः सर्वदेवैरभिष्टुतः ।
प्राह गम्भीरया वाचा वेदानामर्थमुत्तमम् ॥ ६० ॥

इति श्रीस्कान्दपुराणे सूतसंहितायां यज्ञवैभवखण्डस्योपरि-
भागे ब्रह्मगीतासु ब्रह्मगीतिर्नाम प्रथमोऽध्यायः ॥ १ ॥

---

नन्दायेति । शतगुणित आनन्दो यस्य । यद्वा शतसंवत्सरं सुखेन जीवनं यस्य स तथोक्तः ॥ ४९—५६ ॥ स्वप्रकाशैकमानायेति । स्वप्रकाशस्वरूपचैतन्यमेकमेव मानं यस्य स तथोक्तः । स्वरूपप्रकाशेनैव प्रकाशमानो न

# द्वितीयोऽध्यायः ।

## १. वेदार्थविचारः ।

ब्रह्मोवाच—

अवाच्य एव वेदार्थः सर्वथा सर्वचेतनैः ।
तथाऽपि वक्ष्ये भक्तानां युष्माकं शृणुताऽऽदरात् ॥ १ ॥
आत्मसंज्ञः शिवः शुद्ध एक एवाद्वयः सदा ।
अग्रे सर्वमिदं देवा असीत्तन्मात्रमास्तिकाः ॥ २ ॥

---

तु मानान्तरगम्य इत्यर्थः ॥ ५७ ॥ स्तुतिहीनायेति । गुणिनिष्ठगुणाभिधानं हि स्तुतिः । सा च परमार्थतो निर्गुणस्य न भवतीति स्तुतिहीनः ॥ ५८ ॥ वेदानामर्थमिति । समस्तैर्वेदैस्तात्पर्येण प्रतिपादितो योऽर्थः स कीदृग्विध इति पृष्टवन्त इत्यर्थः ॥ ५९ ॥ ६० ॥

इति श्रीमाधवाचार्येण विरचितायां तात्पर्यदीपिकायां यज्ञवैभवखण्डस्यो-परिभागे ब्रह्मगीतासु ब्रह्मगीतिर्नाम प्रथमोऽध्यायः ॥ १ ॥

अथ ब्रह्माऽपि पृष्टं सकलवेदानामर्थं वक्तुमारभमाणस्तस्य विवक्षितस्याद्वितीयनिर्गुणब्रह्मस्वरूपात्मकस्य वेदार्थस्याभिधावृत्त्यविषयत्वं तावदाह—अवाच्य इति । उक्तविधब्रह्मलक्षणो यो वेदार्थः सोऽयं शब्देन सर्वप्रकारेणाप्यभिधावृत्त्या प्रतिपादयितुमशक्य एव । तस्य निर्गुणत्वेन तत्र जातिगुणक्रियादीनां शब्दप्रवृत्तिनिमित्तानामभावात् । अत एव श्रुतिस्तस्य वागगोचरत्वं दर्शयति—"यतो वाचो निवर्तन्ते" इति । तथाऽपीति । एवमभिधावृत्त्यविषयत्वेऽपि लक्षणावृत्त्या प्रतिपादयिष्यत इत्यर्थः ॥ १ ॥ तत्र तावदृग्वेदस्य प्राथम्यात्तदीयोपनिषत्प्रतिपाद्यमर्थं वक्तुकाम एष पन्था इत्यादिसगुणभागस्य चित्तैकाग्र्यादिजननद्वारा निर्गुणभागशेषत्वादन्यशेषतया स्वातन्त्र्येण फलवद्ब्रह्मात्मैकत्वविज्ञानजनकस्य "आत्मा वा इदमेक एवाग्र आसीत्" इत्यादिनिर्गुणभागस्यैवार्थं संगृह्णाति—आत्मसंज्ञ इत्यादिना । तत्र जलविकारस्य तरङ्गबुद्बुदादेर्वस्तुतः कारणजलस्वरूपानतिरेकवन्नामरूपविकारात्मककार्यप्रपञ्चस्यापि कारणभूतादद्वितीयात्परमेश्वरादव्यतिरिक्तत्वं सा-

ततो नान्यन्मिषत्किंचित्स पुनः कालपाकतः ।
प्राणिनां कर्मसंस्कारात्स्वशक्तिगतसत्त्वतः ।
स ऐक्षत जगत्सर्वं नु सृजा इति शंकरः ॥ ३ ॥

---

धयितुं तत्सकाशात्सृष्टिराम्नायते । "आत्मा वा इदमेक एवाग्र आसीन्नान्यत्किंचन मिषत्स ईक्षत लोकान्नु सृजा इति स इमाँल्लोकानसृजत" इत्यस्याः श्रुतेरर्थं ब्रूते—आत्मेति । आप्नोत्युपादानकारणतया स्वकार्यभूतं सर्वं जगदन्तर्बहिश्च व्याप्नोतीत्यात्मा । उक्तं हि—"यच्चाऽऽप्नोति यदादत्ते यच्चात्ति विषयानिह । यच्चास्य संततो भावस्तस्मादात्मेति गीयते" इति । स चाऽऽत्मसंज्ञः सच्चिदानन्दलक्षणः पराशिव एव न तु प्रधानं परमाण्वादिकं वा पराभिमतम् । तस्याचेतनत्वेनानात्मत्वात् । यतोऽयं शिवोऽत एव शुद्धः अशुद्धेः कर्मसंबन्धहेतुकत्वाद्भगवति तस्मिंस्तत्संबन्धस्य च प्रागेव निरस्तत्वात् । उक्तं हि—"ब्रह्मणः कर्मसंबन्धाभावं चाऽऽह परा श्रुतिः" इति । तस्याद्वय इति विशेषणेन विजातीयभेदनिरासः । एवकारेण सजातीयान्तरनिरासः । एक इति स्वगतभेदनिरासः । सृष्टिप्राक्कालवत्सृष्ट्युत्तरकालमपि निर्विकारतया तस्य परमेश्वरस्यैकरूपत्वमिति द्योतयितुं सदेति विशेषणम् । अग्रे सृष्टेः प्राक्काल इदं परिदृश्यमानं नामरूपात्मकं सर्वं जगदुक्तलक्षणात्मस्वरूपमेवाऽऽसीत् । अव्याकृतात्मना तत्स्वरूप एव लीनमासीदित्यर्थः ॥ २ ॥

मात्रचो व्यवच्छेद्यं दर्शयति—तत इति । ततस्तस्मादात्मस्वरूपादन्यन्नामरूपात्मना पृथग्भूतं मिषत्स्फुरत्प्रकाशमानं किमपि वस्तु नाऽऽसीदित्यर्थः । एवं कारणात्मना सद्भावप्रतिपादनादसदेव कार्यमुत्पद्यत इति पक्षो निरस्तः । नन्वेवमसङ्गोदासीनस्य स्वप्रतिष्ठस्याद्वितीयस्याशरीरस्याऽऽत्मनः स्रष्टव्यपर्यालोचनरूपमीक्षणं कथं संभवतीत्याशङ्क्याऽऽह—स पुनरिति । अतीतकल्पसंचितानि प्राणिकर्माणि स्वकारणभूतमायया सह संहृतिसमये पराशिवस्वरूपे वासनाशेषतया प्रलीनानि कालवशात्पच्यन्ते स्वफलप्रदानोन्मुखलक्षणमतिशयं प्राप्नुवन्ति । तस्माच्च कालकृतात्पाकात्स्रष्टुः परमेश्वरस्य सिसृक्षाहेतुभूतः कर्मजनितोऽपूर्वावान्तरपर्यायः संस्कार उद्बुध्यते उद्बुद्धाच्च तस्मात्स्वस्य पराशिवस्य या

स पुनः सकलानेताँल्लोकानात्मीयशक्तितः।
यथापूर्वं क्रमेणैव सुरा असृजत प्रभुः॥ ४॥

शक्तिस्त्रिगुणा माया तत्र रजस्तमोभ्यामसंस्पृष्टं यद्विशुद्धं सत्त्वं तस्माद्धेतोस्तदुपाधिबलात्सिसृक्षारूपमीक्षणं जायत इत्यर्थः। कथमीक्षितवानिति तदुच्यते नामरूपात्मकं यदिदं सर्वं जगदेतावन्तं कालं विलीनमासीत्तन्नु सृजा इति। नुशब्दो वितर्के। तत्सृजा इति किमित्येवंरूपेणेक्षितवानित्यर्थः। अत्र सर्वं जगदिति वदता लोकान्नु सृजा इति भौतिकलोकसृष्टिप्रतिपादिकायाः श्रुतेराकाशादिभूतसृष्टिरपि विवक्षिता। सा तूपसंहारन्यायेय सिद्धेति प्रयोजनाभावान्न पृथगुक्तेत्यभिप्रायो वर्णितः॥ ३॥ एवमीक्षणानन्तरं किं कृतवानिति तत्राऽऽह—स पुनरिति। "अम्भो मरीचीर्मरमापः" इति ये लोकाः श्रुत्यानुक्रान्तास्तानेतान्सर्वाँल्लोकान्स परमेश्वरः प्रभुः स्वतन्त्रोऽपि "सूर्याचन्द्रमसौ धाता यथापूर्वमकल्पयत्" इति श्रुतेरतीतकल्पक्रमानुसारेणैवाऽऽत्मीयशक्तित आत्मनश्च स्वसंबन्धिनी जगदाकारेण विवर्तमाना या त्रिगुणा मायाशक्तिस्तद्बलात्सम्यक्सृष्टवानित्यर्थः। अम्भःप्रभृतीनां निर्वचनं च श्रुत्यैव प्रतिपादितम् "अदोऽम्भः परेण दिवं द्यौः प्रतिष्ठाऽन्तरिक्षं मरीचयः। पृथिवी मरो या अधस्तात्ता आपः" इति। स्वर्लोकादिसत्यलोकान्ता अम्भःशब्दवाच्या मरीचय इत्यन्तरिक्षलोका मर इति मर्त्याश्रितो भूलोकस्तस्याधस्तादतलाद्या सप्तापृशब्दवाच्या इति तस्याः श्रुतेरर्थः। अत्र स्रष्टुरात्मनः परमेश्वरत्वमुक्तम्। तथात्वं च भगवद्भाष्यकारैरपि "आत्मगृहीतिरितरवदुत्तरात्" इत्यधिकरणस्य प्रथमवर्णके निर्णीतम्। तथा हि—किमत्र स्रष्टृत्वेनोक्त आत्मा विराडुत परमेश्वर इति विशये "आत्मन आकाशः संभूतः" इति परमेश्वरकर्तृकसृष्टेराकाशादिमहाभूतविषयत्वादत्र च "स इमाँल्लोकानसृजत" इति भूतसृष्टिव्यतिरेकेण विराट्कर्तृकलोकसृष्टेरेवोपादानात्ताभ्यो गामानयत्ताभ्योऽश्वमानयदिति गवानयनादिशरीरधारिव्यवहारदर्शनादेक एवेत्यद्वितीयत्वावधारणस्य च स्वविकारप्रपञ्चापेक्षया व्युत्पत्तेर्विराडेवात्र स्रष्टृत्वेनोक्त आत्मेति प्राप्तेऽभिधीयते। उपरिष्टाद्धि पृथिवी वायुराकाश आपो ज्योतींषीत्यादिना महाभूतैः

तं हरं केचिदिच्छन्ति केचिद्विष्णुं सुरोत्तमाः ॥ ५ ॥
केचिन्मामेव चेच्छन्ति केचिदिन्द्रादिदेवताः ।
केचित्प्रधानं त्रिगुणं स्वतन्त्रं केवलं जडम् ॥ ६ ॥
अणवः केचिदिच्छन्ति शब्दं केचन मोहिताः ।
क्षणप्रध्वंसिविज्ञानं केचन भ्रान्तचेतसः ॥ ७ ॥

---

सह सर्वं कार्यजातमनुक्रम्य सर्वं तत्प्रज्ञानेत्रमिति प्रज्ञाब्रह्मपरत्वश्रवणादुपक्रमेऽपि महाभूतसृष्टिरुपसंहर्तव्या । तथा च भूतसृष्टिविषयत्वात्परमेश्वर एवात्र स्रष्टा । एवं चैकत्वावधारणमपि न कदर्थितं भवति । गवाद्यानयनं तु विद्यास्तुत्यर्थत्वान्न विरुध्यते । तथाचोक्तम्—"आत्मा वा इदमित्यत्र विराट्स्याद्यथवेश्वरः । भूतसृष्टेर्नेश्वरः स्याद्गवाद्यानयनाद्विराट् ॥ भूतोपसंहृतेरीशः स्याद्द्वैतावधारणात् । अर्थवादो गवाद्युक्तिर्ब्रह्मात्मत्वं विवक्षितम्" इति ॥ ४ ॥ एवं लोकसृष्टिप्रतिपादनेन परमेश्वरस्वरूपं ताटस्थ्येन लक्षयित्वा श्रुत्युक्तलोकपालादिसृष्टेरपि स्रष्टुर्लक्षकत्वरूपस्य प्रयोजनस्यैकत्वेन गतार्थत्वादन्यस्य च सर्वस्य "स एतमेव सीमानं विदार्य" इत्यादेः प्रज्ञा प्रतिष्ठा प्रज्ञानं ब्रह्मेति ब्रह्मात्मैकत्वलक्षणप्रतिपादकवाक्यशेषत्वात्सर्वं परित्यज्य कोऽयमात्मेत्यादिवाक्यसंदर्भप्रतिपादितमर्थं वक्तुकामः "तं प्रपदाग्राभ्यां प्रापद्यत ब्रह्मेमं पुरुषं स एतमेव सीमानं विदार्यैतया द्वारा प्रापद्यत" इति श्रुतिबलात्पादाग्राभ्यां ब्रह्मरन्ध्राच्च प्रविष्टयोः क्रियाशक्तिज्ञानशक्तिलक्षणयोर्ब्रह्मणोर्मध्ये कतरः स आत्मेति जायमानसंशयवद्वादिविप्रतिपत्तेरपि तद्धेतुत्वात्तमुदाहरति–तं हरमित्यादिना । यः स्रष्टृत्वेनोक्त आत्मा तमित्यर्थः ॥ ५ ॥ केचित्प्रधानमिति । सांख्या हि चेतनोपादानत्वे जगतो जडत्वानुपपत्तेस्तदनुरूपमचेतनं सत्त्वरजस्तमोगुणात्मकं प्रधानमेव जगदुपादानमिति तस्यैव स्रष्टृत्वमिच्छन्ति । वेदान्त्यभिमतमायातो वैलक्षण्यमाह—स्वतन्त्रमिति । सा हि परमेश्वराश्रिततया तत्परतन्त्रा ॥ ६ ॥ अणवः केचिदिति । न्यूनपरिमाणैर्मृदवयवैराधिकपरिमाणस्य घटादेरारम्भदर्शनात्पार्थिवादिपरमाणव एव द्व्यणुकादिप्रक्रियया प्राण्यदृष्टवशात्सर्वं जगदारभन्त इति तार्किकाः । शब्दं केचनेति । वैयाकर-

शून्यसंज्ञं सुराः केचिन्निरुपाख्यं विमोहिताः।
केचिद्भूतानि चेच्छन्ति निसर्गं केचन भ्रमात् ॥ ८ ॥
तत्र तत्रैव तर्कांश्च प्रवदन्ति यथाबलम् ।
सर्वे वादाः श्रुतिस्मृत्योर्विरुद्धा इति मे मतिः ॥ ९ ॥
पापिष्ठानां तु जन्तूनां तत्र तत्र सुरर्षभाः ।
प्राक्संसारवशादेव जायते रुचिरास्तिकाः ॥ १० ॥
तेऽपि कालविपाकेन श्रद्धया पूतयाऽपि च ।
पुरातनेन पुण्येन देवतानां प्रसादतः ॥ ११ ॥
कालेन महता देवाः सोपानक्रमतः पुनः ।

---

णास्तु शब्दब्रह्मैवार्थप्रपञ्चात्मना विवर्तत इति शब्दस्यैव कारणत्वं वर्णयन्ति। उक्तं हि—"अनादिनिधनं ब्रह्म शब्दतत्त्वं यदक्षरम् ॥ विवर्ततेऽर्थभावेन प्रक्रिया जगतो यतः" इति ॥७॥ भूतानि चेच्छन्तीति । भूतेभ्य एव भौतिकस्य सर्वस्योत्पत्तिदर्शनात्तेषामेव स्रष्टृत्वं न तु तद्व्यतिरिक्तः कश्चित्स्रष्टा विद्यत इति केषांचित्पक्षः। अपरे तु भ्रान्ता न कदाचिदनीदृशं जगदिति सर्ग एव नास्तीति मन्यन्ते । तथा च श्रुतावपि जगत्कारणे वादिविप्रतिपत्तिर्दर्शिता—"कालः स्वभावो नियतिर्यदृच्छा भूतानि योनिः पुरुष इति चिन्त्यम्" इति ॥ ८ ॥ श्रुतिस्मृत्योर्विरुद्धा इति । "सोऽकामयत बहु स्यां प्रजायेयेति तदात्मानं स्वयमकुरुत" । "मत्तः परतरं नान्यत्किंचिदस्ति धनंजय । मयि सर्वमिदं प्रोतं सूत्रे मणिगणा इव ॥ मयाऽध्यक्षेण प्रकृतिः सूयते सचराचरम्" इत्यादिश्रुतिस्मृतिभ्यां चेतनस्य परमेश्वरस्य जगदुपादानत्वनिमित्तत्वयोः श्रवणात्तद्विरुद्धतया वादिविप्रतिपत्तेरप्रामाणिकत्वात्तद्धेतुकः संशयो जगत्कारणे नास्तीति सिद्धमात्मसंज्ञः शिव इति प्रतिज्ञातम् ॥ ९ ॥ नन्वेवं श्रुतिस्मृतिविरोधात्सांख्यादिशास्त्राणामप्रामाण्ये कथं तत्र तीर्थकाराणां प्रवृत्तिरित्याशङ्क्य तत्र प्रवृत्तौ पापमेव कारणमित्याह—पापिष्ठानामित्यादिना॥ १०॥ ११॥ सोपानक्रमत इति। स्वस्वशास्त्रादात्मानात्मविवेकं सामान्येन जा-

वेदमार्गमिमं मुख्यं प्राप्नुवन्ति चिरंतनम् ॥ १२ ॥
प्राक्संस्कारवशादेव ये विचिन्त्य बलाबले ।
विवशा वेदमापन्नास्तेऽपि कैवल्यभागिनः ॥ १३ ॥
वेदमार्गमिमं मुक्त्वा मार्गमन्यं समाश्रितः ।
हस्तस्थं पायसं त्यक्त्वा लिहेत्कूर्परमात्मनः ॥ १४ ॥
विना वेदेन जन्तूनां मुक्तिर्मार्गान्तरेण चेत् ।
तमसाऽपि विनाऽऽलोकं ते पश्यन्ति घटादिकम् ॥ १५ ॥
तस्माद्वेदोदितो ह्यर्थः सत्यं सत्यं मयोदितम् ।
अन्येन वेदितो ह्यर्थो न सत्यः परमार्थतः ॥ १६ ॥
परमार्थो द्विधा प्रोक्तो मया हे स्वर्गवासिनः ।
एकः स्वभावतः साक्षात्परमार्थः सदैव तु ॥ १७ ॥

---

नानाः सांख्यादयस्तद्विशेषप्रतिपादकमुपानिषन्मार्गं परंपरया समाश्रयन्त इत्यर्थः॥ १२ ॥ विचिन्त्य बलाबले इति । वेदमार्गमाश्रितास्ते स्वशास्त्रस्य वेदस्य च बलाबले विचार्य पुरुषबुद्धिप्रभवत्वेन स्वशास्त्रस्य दौर्बल्यमपौरुषेयत्वेन वेदस्य च निर्दुष्टं प्रामाण्यं निश्चिन्वानास्तत्परतन्त्राः स्वमार्गं परित्यज्य वेदमार्गमेव केवलमाश्रयन्ते । अतः सोपानक्रमेण तेषामपि वेदोदिता मुक्तिर्भूयसा कालेन सिध्यतीत्यर्थः ॥ १३—१५ ॥ तस्मादिति । यस्मादेवं मार्गान्तराणामपि वेदे पर्यवासनं तस्मादपौरुषेयत्वेन निर्दुष्टवेदवाक्यप्रतिपादित एवार्थः सत्यो न तु वेदव्यतिरिक्तेनेत्यर्थः ॥ १६ ॥ ननु वेदप्रतिपादितोऽर्थः सत्यश्चेत्क्रियाकारकादिभेदाभिन्नस्य जगतोऽप्यात्मवद्वेदार्थतया सत्यत्वं स्यादित्याशङ्क्य तस्य व्यावहारिकसत्यत्वं प्रतिपादयितुं वेदार्थस्य द्वैविध्यमाह—परमार्थ इति। वेदे हि काण्डद्वयम् । तत्र ज्ञानकाण्डे सत्यज्ञानादिलक्षणो योऽर्थः प्रतिपादितः स एव साक्षात्परमार्थः । कर्मकाण्डप्रतिपादितस्तु स्वर्गापूर्वादिदेवतालक्षणः प्रपञ्चः सत्यज्ञानादिलक्षणे परमात्मन्यध्यस्तमायया परिकल्पितः। तदेतत्काण्ड-

स शिवः सत्यचैतन्यसुखानन्तस्वलक्षणः ।
अपरः कल्पितः साक्षाद्ब्रह्मण्यध्यस्तमायया ॥ १८ ॥
कल्पितानामवस्तूनां मध्ये केचन मायया ।
परमार्थतया क्लृप्ता व्यवहारे सुरर्षभाः ॥ १९ ॥
व्यवहारे तु संक्लृप्ताः केचनापरमार्थतः ।
आकाशादि जगच्छुक्तिरूप्ये ते कथिते मया ॥ २० ॥
व्यावहारिकसत्यार्थं साक्षात्सत्यार्थचिद्घनम् ।
उभयं वक्ति वेदस्तु मार्गा नैवं वदन्ति हि ॥ २१ ॥
स्वप्नावस्थासु संक्लृप्तसत्यार्थेन समानिमान् ।
अर्थानेवाऽऽमनन्त्यन्ये मार्गा हे स्वर्गवासिनः ॥ २२ ॥
जाग्रत्काले तु संक्लृप्तसत्यार्थेन समानिमान् ।

---

द्वयस्य कल्पिताकल्पितविषयत्वं प्रागपि प्रपञ्चितम्—"सत्याद्वैतपरः कश्चिद्वेदभागः समासतः। कल्पितद्वैतनिष्ठस्तु वेदभागोऽपरस्तथा" इति॥ १७॥१८॥ यद्येवं कल्पितद्वैतपरःकर्मकाण्डस्तर्हि सर्वोऽपि वेदार्थः सत्य इति नियमो न स्यादित्यतआह—कल्पितानामिति । सर्वस्य मायापरिकल्पितत्वेनावस्तुत्वेऽप्याकाशादिकं व्यावहारिकसत्यत्वेनैव परिकल्प्यते । शुक्तिरूप्यादिकं तु व्यवहारेऽप्यसत्यतयैवेति ॥ १९ ॥ २० ॥ जगतोऽपि व्यावहारिकसत्यत्वाङ्गीकारान्न वेदार्थस्य सत्यत्वहानिरित्याह- व्यावहारिकेति । सति प्रमातर्यबाध्यमानं जगद्व्यावहारिकसत्यम् । कदाचिदपि बाधविधुरं सत्यज्ञानानन्दैकरसं ब्रह्म हि परमार्थतः सत्यम् । तदुभयं वेदः प्रतिपादयति । मार्गान्तरं तु नैवमित्यर्थः॥ २१ ॥ किं तर्हि मार्गान्तरैः प्रतिपादितमिति तदाह—स्वप्नेत्यादिना । अन्ये सौगतनिर्मिता मार्गाः स्वप्नावस्थापरिकल्पितसत्यार्थसदृशाञ्जाग्रदर्थानेव केवलं प्रतिपादयन्ति न तूक्तविधं साक्षात्सत्यमात्मानम् । अन्ये तु वैशेषिकादिमार्गा जाग्रदवस्थायां व्यावहारिकसत्यत्वेन मायापरिकल्पितो यो वेदान्त्यभिमतस्तत्सदृशान्द्रव्यगुणकर्मलक्षणानर्थानेव केवलं प्रतिपादयन्ति ॥ २२ ॥

मार्गा एवाऽऽमनन्त्यर्थान्का कथा सत्यचिद्घने ॥ २३ ॥
तस्मादेकैकया दृष्ट्या मार्गाः सत्यार्थभाषिणः ।
दृष्ट्यन्तरेण ते भ्रान्ता इति सम्यङ्निरूपणम् ॥२४॥
चैतन्यापेक्षया चेत्यं व्योमादि सकलं जगत् ।
असत्यं सत्यरूपं तत्कुम्भकुड्याद्यपेक्षया ॥ २५ ॥
कुम्भकुड्यादयो भावा अपि व्योमाद्यपेक्षया ।
असत्याः सत्यरूपास्ते शुक्तिरूप्याद्यपेक्षया ॥ २६ ॥
जाग्रदित्युदितावस्थामपेक्ष्य स्वपनाभिधा ।
अवस्थाऽसत्यरूपा हि न सत्या हि दिवौकसः ॥ २७ ॥

---

अतो मार्गाणां सत्यचिद्घने पारमार्थिके वस्तुनि का कथा प्रतिपादनप्रसक्तिरपि नास्तीत्यर्थः ॥ २३ ॥ तस्मादिति । व्यावहारिकसत्यस्य जगत एव प्रतिपादनात्पारमार्थिकसत्यचिद्घनवस्तुनोऽप्रतिपादनाच्चेत्यर्थः । एकैकया दृष्ट्येति । व्यापहारिकदृष्ट्या । दृष्ट्यन्तरेणेति । पारमार्थिकदृष्ट्येत्यर्थः । भ्रान्ता इति । व्यावहारिकसत्यस्याऽऽकाशादिजगतः पारमार्थिकसत्यत्वेनान्यथाग्रहणात्तेषां भ्रान्तत्वम् ॥ २४ ॥ ननु व्यावहरिकसत्यत्वमेव पारमार्थिकसत्यत्वम् । न ह्येकमेव वस्तु दृष्टिभेदमात्रेण सत्यमसत्यं च भवतीत्यत आह—चैतन्येति । मृल्लोहादिकारणेषु सत्सु तत्र घटादिकार्यलयदर्शनात्कारणमात्रस्य सत्यत्वं कार्यस्य चासत्यत्वं प्रसिद्धम् । तथाच कारणभूतं परशिवचैतन्यमपेक्ष्य तत्कार्यं चेत्यं वियदादिभूतजातमसत्यम् । तच्च घटकुड्यादिलक्षणस्वकार्यस्य कारणभूतं सत्तदपेक्षया सत्यम् ॥ २५ ॥ कुम्भकुड्यादयोऽपि स्वकारणभूतवियदादिमहाभूतापेक्षयाऽसत्यास्तेऽपि सत्येव प्रमातरि बाध्यमानं शुक्तिरजतादिकमपेक्ष्य सत्याः । सति प्रमातर्यबाध्यमानत्वात् ॥ २६ ॥ तथा जाग्रदवस्था स्वकाणमपेक्ष्यासत्याऽपि सति प्रमातरि बाधविरहरूपस्वप्नावस्थावैलक्षण्यात्सत्या तामपेक्ष्य स्वप्नावस्थाऽपि सत्येव प्रमातरि बाधितत्वादसत्यैवा । एवमेकस्यैव वस्तुनो व्यवहारदृष्ट्या सत्यत्वं परमार्थोपाधावसत्यत्वं च न विरुध्यत

तथाऽपि स्वप्नदृष्टं तु वस्तु स्वर्गनिवासिनः ।
सूचकं हि भवत्येव जाग्रत्सत्यार्थसिद्धये ॥ २८ ॥
तथैव मार्गास्तु भ्रान्ता अपि वेदोदितस्य तु ।
अर्थस्य प्राप्तिसिद्ध्यर्था भवन्त्येव न संशयः ॥ २९ ॥
तस्माद्वेदपरा मार्गा नैव त्याज्या निरूपणे ॥
वेदनिष्ठस्तु तान्मार्गान्कदाचिदपि न स्पृशेत् ॥ ३० ॥
वेदनिष्ठस्तु मार्गांस्तान्मोहेनापि स्पृशेद्यदि ।
प्रायश्चित्ती भवत्येव नात्र कार्या विचारणा ॥ ३१ ॥
एकस्यामपि तैः सार्धं पङ्क्तौ वेदैकसंस्थितः ।
मोहेनापि न भुञ्जीत भुक्त्वा चान्द्रायणं चरेत् ॥३२॥
इज्यादानविवाहादिकार्यमध्ययनं श्रुतेः ।
यदि तैर्मोहतः कुर्यात्कुर्याच्चान्द्रायणत्रयम् ॥ ३३ ॥
धर्माधर्मादिविज्ञानं नाऽऽददीत श्रुतौ स्थितः ।
तेभ्यो मोहादपि प्राज्ञः श्रेयस्कामी कदाचन ॥ ३४ ॥
वेदबाह्येषु मार्गेषु संस्कृता ये नराः सुराः ।
ते हि पाषण्डिनः साक्षात्तथा तैः सहवासिनः ॥ ३५ ॥

---

इत्यर्थः ॥ २७ ॥ यद्येवं परमार्थदृष्ट्याऽसत्यस्यैव सत्यतयाऽध्यवसायान्मार्गा भ्रान्तास्तर्हि मिथ्याभूतानां तेषां परंपरयाऽपि कथं वेदमार्गावाप्तिद्वारा परमार्थसत्यचिद्घनपराशिवस्वरूपावाप्तिहेतुत्वमित्याशङ्क्य सदृष्टान्तमुपपादयति—तथाऽपीति । यद्यपि स्वप्नावस्था मिथ्यभूता तथाऽपि स्वप्नदृष्टं वस्तु भाविनः सत्यस्य फलस्य सूचकं भवति । सूचकत्वं भगवता व्यासेनापि सूत्रितम् "सूचकश्च हि श्रुतेराचक्षते च तद्विदः" इति । सा च श्रुतिरेवमाम्नाता—"यदा कर्मसु काम्येषु स्त्रियं स्वप्नेषु पश्यति । समृद्धिं तत्र जानीयात्" इति ॥ २८ ॥ यथाचैवं तथैव मिथ्याभूता अपि मार्गा वेदप्रतिपादितस्य सच्चिदानन्दाखण्डै-

कलौ जगद्विधातारं शिवं सत्यादिलक्षणम् ।
नार्चयिष्यन्ति वेदेन पाषण्डोपहता जनाः ॥ ३६ ॥
वेदसिद्धं महादेवं साम्बं चन्द्रार्धशेखरम् ।
नार्चयिष्यन्ति वेदेन पाषण्डोपहता जनाः ॥ ३७ ॥
वेदोक्तेनैव मार्गेण भस्मनैव त्रिपुण्ड्रकम् ।
धूलनं नाऽऽचरिष्यन्ति पाषण्डोपहता जनाः ॥ ३८ ॥
रुद्राक्षधारणं भक्त्या वेदोक्तेनैव वर्त्मना ।
न करिष्यन्ति मोहेन पाषण्डोपहता जनाः ॥ ३९ ॥
लिङ्गे दिने दिने देवं शिवरुद्रादिसंज्ञितम् ।
नार्चयिष्यन्ति वेदेन पाषण्डोपहता जनाः ॥ ४० ॥
देवकार्यं न कुर्वन्ति पितृकार्यं विशेषतः ।
औपासनं न कुर्वन्ति पाषण्डोपहता जनाः ॥ ४१ ॥
पञ्चयज्ञं न कुर्वन्ति तथैवातिथिपूजनम् ।
वैश्वदेवं न कुर्वन्ति पाषण्डोपहता जनाः ॥ ४२ ॥
वेदबाह्येन मार्गेण पूजयन्ति जनार्दनम् ।
निन्दन्ति शंकरं मोहात्पाषण्डोपहता जनाः ॥ ४३ ॥
ब्रह्माणं केशवं रुद्रं भेदभावेन मोहिताः ।
पश्यन्त्येकं न जानन्ति पाषण्डोपहता जनाः ॥ ४४ ॥
अदक्षिणमनभ्यङ्गमधौतच्चरणं तथा ।
कुर्वन्त्यनग्निकं श्राद्धं पाषण्डोपहता जनाः ॥ ४५ ॥
एकादश्यामथाष्टम्यां चतुर्दश्यां विशेषतः ।
उपवासं न कुर्वन्ति पाषण्डोपहता जनाः ॥ ४६ ॥

शतरुद्रीयचमकैस्तथा पौरुषसूक्तकैः ।
नाभिषिञ्चन्ति देवेशं पाषण्डोपहता जनाः ॥ ४७ ॥
चिरंतनानि स्थानानि शिवस्य परमात्मनः ।
न द्रक्ष्यन्ति महाभक्त्या पाषण्डोपहता जनाः ॥ ४८ ॥
श्रीमद्दक्षिणकैलासे वर्तनं श्रद्धया सह ।
वत्सरं न करिष्यन्ति पाषण्डोपहता जनाः ॥ ४९ ॥
श्रीमद्व्याघ्रपुरे पुण्ये वर्तनं भुक्तिमुक्तिदम् ।
वत्सरं न करिष्यन्ति पाषण्डोपहता जनाः ॥ ५० ॥
अन्येषु च विशिष्टेषु शिवस्थानेषु वर्तनम् ।
वत्सरं न करिष्यन्ति पाषण्डोपहता जनाः ॥ ५१ ॥
दिने दिने तु वेदान्तमहावाक्यार्थनिर्णयम् ।
आचार्याश्च करिष्यन्ति पाषण्डोपहता जनाः ॥ ५२ ॥
संन्यासं परहंसाख्यं नाङ्गीकुर्वन्ति मोहिताः ।
प्रद्वेषं च करिष्यन्ति पाषण्डोपहता जनाः ॥ ५३ ॥
अन्यानि यानि कर्माणि वेदेनैवोदितानि तु ।
नाऽऽचरिष्यन्ति तान्येव पाषण्डोपहता जनाः ॥ ५४ ॥
स्मार्तान्यपि च कर्माणि यानि यानि सुरोत्तमाः ।
नाऽऽचरिष्यन्ति तान्येव पाषण्डोपहता जनाः ॥ ५५ ॥
ऊर्ध्वपुण्ड्रं ललाटे तु वर्तुलं चार्धचन्द्रकम् ।
धारयिष्यन्ति मोहेन पाषण्डोपहता जनाः ॥ ५६ ॥
शङ्खचक्रगदावज्रैरङ्कनं विग्रहे स्वके ।
मोहेनैव करिष्यन्ति पाषण्डोपहता जनाः ॥ ५७ ॥

मनुष्याणां च नाम्ना तु तेषामाकारतोऽपि च ।
लाञ्छिताश्च भविष्यन्ति पाषण्डोपहता जनाः ॥ ५८ ॥
बहुनोक्तेन किं वेदमर्यादाभेदनं सुराः ।
श्रद्धयैव करिष्यन्ति पाषण्डोपहता जनाः ॥ ५९ ॥
धीरा विशिष्टाश्च महेश्वरस्य प्रसादयुक्ताश्च महत्तमाश्च ।
वेदोदितं केवलमेवदेवा मुदा करिष्यन्ति विमुक्तिसिद्ध्यै ॥

इति श्रीस्कान्दपुराणे सूतसंहितायां यज्ञवैभवखण्डस्योपरिभागे ब्रह्मगीतासु वेदार्थविचारो नाम द्वितीयोऽध्यायः २

---

## तृतीयोऽध्यायः ।

३. साक्षिशिवस्वरूपकथनम् ।

ब्रह्मोवाच—

सर्वात्मा शंकरो नाम साक्ष्येव सकलस्य तु ।
साक्ष्यभावे जगत्साक्ष्यं कथं भाति सुरोत्तमाः ॥ १ ॥

---

करसस्य परमार्थसत्यवस्तुनः सोपानक्रमेण प्रातिहेतवो भवन्तीत्यर्थः ॥ २९–६० ॥

इति श्रीसूतसंहितातात्पर्यदीपिकायां चतुर्थस्य यज्ञवैभवखण्डस्योपरिभागे ब्रह्मगीतासूपनिषत्सु वेदार्थविचारो नाम द्वितीयोऽध्यायः॥२॥

तं हरं केचिदित्यादिना वादिविप्रतिपत्तिं निराकृत्य श्रुतिप्रसिद्ध एवाऽऽत्मा स्रष्टृत्वेनोक्त इत्ययमर्थः प्रतिपादितः। स एव स्वसृष्टदेहेषु क्रियाशक्त्यात्मना प्राणरूपेणावस्थितः "तं प्रपदाभ्यां प्रापद्यत ब्रह्मेमं पुरुषम्" इति श्रुतेः। तथा चिच्छक्तिरूपेण च ब्रह्मरन्ध्रात्प्रविष्टः "स एतमेव सीमानं विदार्यैतया द्वारा प्रापद्यत" इति श्रुतेः। अनयोर्मध्ये कतरः स आत्मा यः प्रत्यगात्मस्वरूपत्वेन ज्ञातव्यः। स किं प्राणरूप उत चिच्छक्त्यात्मक इति

स्वतो भानविहीनं हि जगत्सर्वं चराचरम्।
जडताऽजडता चास्य जगतो भानवत्तया॥ २॥
भानं विज्ञानतो जन्यमिति कैश्चिदुदीर्यते।
तन्न संगतमेव स्याज्जन्यं चेज्जडमेव तत्।
जडानामेव जन्यत्वं घटादीनां हि संमतम्॥ ३॥
विज्ञानं चापि भानस्य नैवोत्पादकमिष्यते।
ज्ञानस्य भानरूपेण परिणामो न सिध्यति॥ ४॥

---

हि प्रश्नः श्रुतावुवतारितस्तस्योत्तरभूता "येन वा पश्यति येन वा शृणोति" इत्यादिका श्रुतिः। अथ तस्याः श्रुतेरर्थं वक्तुमात्मनः सर्वसाक्षित्वं साधयति—सर्वात्मेति। सर्वेषु शरीरेष्वात्मत्वेनावस्थितो यः परमेश्वरोऽसौ सर्वस्य जडप्रपञ्चस्य भासकः साक्षी चिन्मात्रस्वरूप एवैष्टव्यः। विपक्षे बाधकमाह-साक्ष्यभाव इति। यद्यसौ चिन्मात्रस्वरूपः साक्षी न स्यात्केन तर्हि प्रकाशेन साक्ष्यं जगद्भासेत। अतः साक्षिरूपं भानमङ्गीकर्तव्यमित्यर्थः॥ १॥ साक्षिस्वरूपवत्साक्ष्यस्यापि स्वत एव भानं कस्मान्न भवतीत्यत आह—स्वत इति। जडं हि जगत्स्वाभाविकस्फुरणरहितम्। अतः साक्षिस्फुरणाभावे तस्य भानं न स्यादित्यर्थः। ननु साक्षिणोऽभावेऽपि जडं जगदजडेन ज्ञानाधारेणाऽऽत्मना ज्ञायत एवेत्यत आह—जडतेति। अनात्मनो जडत्वमात्मनश्चाजडत्वमित्येतदुभयमप्यस्य जगतो भानवत्तयैवाधिगन्तव्यम्। यदि हि जगद्भानविषयं स्यात्तदा तस्य चिद्भास्यत्वाज्जडत्वम्। यस्तु तादृशभानाश्रयः सोऽजड इति जडत्वाजडत्वे उभे अपि भानाधीननिरूपणे इत्यवश्यं साक्षिरूपं भानमङ्गीकर्तव्यमित्यर्थः॥ २॥ नन्वस्तु भानं तत्तु चक्षुरादिवदप्रकाशमानेन निलीनेन विज्ञानेन स्वविषये जन्यत इति भाट्टमतमाशङ्कते-भानमिति। तन्निरस्यति—तन्नेति। यदि हि विषयस्फुरणरूपं भानं जन्यं स्यात्तर्हि मृज्जन्यघटादिवज्जन्यत्वहेतुना जडमेव स्यात्। अतो विषयवद्भानस्यापि जडत्वाविशेषात्तद्बलान्न तस्य स्फूर्तिसंभव इत्यर्थः॥ ३॥ यत्तावदुक्तं विज्ञानेन भानं विषये जन्यत

अविक्रियत्वाज्ज्ञानस्य यदि तस्यापि विक्रिया ।
तर्हि क्षीरादिवच्चेत्यं भवेत्तन्नैव वेदनम् ॥ ५ ॥
तथा भानस्य विज्ञानं नैवाऽऽरम्भकमिष्यते ।
अद्रव्यत्वाद्गुणत्वेन परैरङ्गीकृतत्वतः ॥ ६ ॥
असद्रूपस्य भानस्य ज्ञानं नाऽऽरम्भकं भवेत् ।
वन्ध्यासूनोरपि ज्ञानं तदा ह्यारम्भकं भवेत् ॥ ७ ॥
प्रागसद्रूपभानस्य ज्ञानं नाऽऽरम्भकं भवेत् ।
असतः प्राक्त्वपूर्वाणां विशेषाणामभावतः ॥ ८ ॥
अतो विज्ञानजन्यत्वं नास्ति भानस्य सर्वदा ॥ ९ ॥

---

इति न तद्युज्यत इत्याह—विज्ञानं चेति ॥ ४ ॥ भानस्य विज्ञानं जनकमिति वदन्वादी प्रष्टव्यः। किं विज्ञानं भानरूपेण परिणतमुत भानस्याऽऽरम्भकमिति। नाऽऽद्य इत्याह—ज्ञानस्येति । विकारिण एव क्षीरादेर्दध्यादिरूपेण परिणामो दृष्टः स त्वविक्रियत्वाज्ज्ञानस्य न संभवति । यदि ज्ञानस्यापि विक्रिया स्यात्तर्हि क्षीरादिवदेव चेत्यं भवेत् । अतो विक्रियावत्त्वे सति तस्य ज्ञानत्वमेव हीयेतेत्यर्थः ॥ ५ ॥ आरम्भकत्वमपि निराकरोति—तथेति । द्रव्यं हि द्रव्यान्तरारम्भकम् । तन्तुपटादौ तथा दृष्टत्वात् । विज्ञानं तु न द्रव्यम् । गुणत्वेन परैरङ्गीकारात् । अतो भानद्रव्यस्याद्रव्येण सता ज्ञानेनाऽऽरम्भो न युक्तः ॥ ६ ॥ असद्रूपस्येति । आरम्भवादे ह्यसदेव कार्यमुत्पद्यत इति स्थितिः । तथा चासद्रूपस्य भानस्य ज्ञानमारम्भकमिति न युक्तम् । यदि ह्यसदपि ज्ञानमारभते तर्हि तज्ज्ञानं वन्ध्यापुत्रादेरप्यारम्भकं स्यात् । असत्त्वाविशेषादित्यर्थः॥ ७ ॥ ननु प्रागसतः सत्तासंबन्ध उत्पत्तिरित्यङ्गीकाराद्वन्ध्यासुतादेश्चात्यन्तासत्त्वात्कथं तदारम्भकप्रसक्तिरित्यत आह- असतः प्राक्त्वपूर्वाणामिति । प्राक्त्वमत्यन्तासत्त्वमित्येवमादिभावरूपधर्मविशेषाश्रयत्वाभावात्तदाश्रयत्वे च भावत्वप्रसङ्गादसतस्तत्कृतो भेदो न युक्त इत्यर्थः । परिणामारम्भकत्वव्यतिरेकेणोत्पादकत्वानिरूपणाद्विज्ञानं भानस्य जनकमित्युपसंहरति—अत इति ॥ ८ ॥ ९ ॥

ज्ञानस्यापि न जन्यत्वमस्ति हे स्वर्गवासिनः ।
उक्तन्यायेन जन्यत्वप्रतीतिर्भ्रान्तिरेव हि ॥ १० ॥
भानस्यापि तथा भ्रान्तिर्जन्यत्वप्रतिभा सुराः ।
भावत्वे सत्यजन्यत्वाद्भानं नित्यं सुरोत्तमाः ॥ ११ ॥
यज्जगद्भासकं भानं नित्यं भाति स्वतः सुराः ।
स एव जगतः साक्षी सर्वात्मा शंकराभिधः ॥ १२ ॥
तेन कल्पितसंबन्धादज्ञानं भाति न स्वतः ।

---

उक्तमर्थमन्यत्राप्यतिदिशति—ज्ञानस्येति । उक्तन्यायेनेति । यदि हि ज्ञानं जन्यं स्यात्तर्हि जन्यत्वहेतुना घटवज्जडमेव स्यादित्यनेन न्यायेनेत्यर्थः । ननु रूपादिविषयैश्चक्षुरादीन्द्रियसंप्रयोगानन्तरं रूपादिविषयज्ञानं जायमानं दृश्यते का तर्हि तस्य गतिरित्यत आह—जन्यत्वेति । विषयाकारपरिणताऽन्तःकरणवृत्तिर्हि तत्र जन्यते । अतस्तदीयं जन्यत्वं तदवच्छिन्नचैतन्येऽपि स्फटिके लौहित्यादिवदवभासते । अतो भ्रान्तिरेव ज्ञाने जन्यत्वप्रतीतिरित्यर्थः ॥१०॥ भानस्यापीति । घटादिविषयस्फुरणरूपस्य भानस्यापि जन्यत्वप्रतीतिर्भ्रान्तिरेव तस्याप्युत्पत्तिमद्वृत्तिज्ञानान्वयव्यतिरेकानुविधायित्वेन तस्यैव जन्यत्वस्य तत्राध्यवसानात् । एवं भानस्याजन्यत्वं प्रसाध्य नित्यत्वं साधयति—भावत्व इति । अजन्यस्यापि प्रागभावस्यानित्यत्वदर्शनात्तद्व्यावृत्त्यर्थं विशिनष्टि—भावत्वे सतीति । विमतं नित्यं भावत्वे सत्यजन्यत्वादात्मवदित्यभिप्रायः ॥ ११ ॥ एवं भानस्य नित्यत्वं प्रसाध्य तदभेदात्परमेश्वरस्य प्रतिज्ञातं साक्षिचिन्मात्ररूपत्वं निगमयति—यज्जगदिति । यदेतत्सर्वं जगतो भासकं नित्यं भानं स्वभावतो भानान्तरनैरपेक्ष्येण भाति स एव सर्वस्य जगतः साक्षी द्रष्टा सर्वदेहेष्वात्मभावेनावस्थितः परमेश्वरः । यद्भानमित्युद्देश्यस्य नपुंसकलिङ्गत्वेऽपि स एवेति पुल्लिङ्गनिर्देशो विधेयापेक्षया । उक्तं हि—"निर्दिश्यमानप्रतिनिर्दिश्यमानयोरेकतामापादयन्ति सर्वनामानि पर्यायेण तल्लिङ्गतामुपाददते" इति । तादृशभानात्मको यः स एव साक्षिरूपेणावस्थितः परशिवो न तु जडरूप इत्यर्थः ॥१२॥ तस्य च नित्यस्वप्रकाशभानमात्रस्वरूपस्याज्ञानतत्कार्यरूपसर्वजगत्साक्षित्वमुप-

अज्ञानजन्यं चित्तं च रागद्वेषादयस्तथा।
अज्ञानस्पृष्टचैतन्यादेव भान्ति न च स्वतः ॥ १३ ॥
प्राणश्चापि तथा बाह्यकरणानि वपुस्तथा।
चित्तवृत्त्यभिसंबन्धद्वारेणैव दृगन्वयात् ॥ १४ ॥
विभान्ति न स्वतो बाह्यविषयाश्च तथैव च ॥ १५ ॥
अनुमानादिवृत्तिस्थं चैतन्यं सुरसत्तमाः।
अर्थानामपि केषां चिद्भासकं तेन शंकरः ॥ १६ ॥
सर्वावभासकः प्रोक्तस्तेन भातमिदं जगत्।
अतो रूपाणि तेनैव पश्यतीशेन मानवः ॥ १७ ॥

---

पादयति—तेन कल्पितसंबन्धादिति। "असङ्गो ह्ययं पुरुषः" इत्यसङ्गश्रुतेर्भानमात्ररूपस्य परशिवस्य न केनचिदपि पारमार्थिकसंबन्धः शक्यते वक्तुम्। अतश्चाज्ञानवत्संबन्धोऽपि साक्षिणि परिकल्पितो विद्यत इति तत्संबन्धवशात्तेन साक्षिभावेन तत्स्वरूपेऽध्यस्तमज्ञानं भाति न तु स्वाभाविकेन प्रकाशेनेत्यर्थः। अज्ञानजन्यमिति। तेनाज्ञानेन जन्यं यत्सत्त्वपरिणामरूपमन्तःकरणं ये च रागादयस्तद्धर्मास्तत्सर्वं स्वोपादनभूताज्ञानसंबद्धचैतन्यादेव भाति न तु स्वभावतः ॥१३॥ प्राणश्चापीति। प्राणेन्द्रियदेहादिकमप्युपादानभूताज्ञानसंबन्धद्वारा चित्संवलिता या चित्तवृत्तिस्तद्व्याप्ततया परंपरया दृग्रूपसाक्षिचैतन्यसंबन्धवशादेव भाति न तु स्वत इत्यर्थः। बाह्यविषयाश्चेति। बाह्यघटपटादिविषयजातमपि स्वसंप्रयुक्तचक्षुरादीन्द्रियसंबन्धाच्चित्संवलितताद्विषयाकारान्तःकरणवृत्तिव्याप्यतया परंपरया साक्षिचैतन्यसंबन्धादेव भाति ॥१४॥१५॥ अनुमानादिवृत्तिस्थमिति। आदिशब्देनोपमानादिसंग्रहः। धूमवत्त्वादित्यादिव्याप्तिहेतुजनिता याऽन्तःकरणवृत्तिस्तत्र प्रागुक्तरीत्या यदवस्थितं चैतन्यं तदपि स्वाश्रयभूतान्तःकरणवृत्तिजनकधूमवत्त्वादिहेतुव्यापकानामग्निमत्त्वादीनां केषांचिदर्थानां परंपरया संबन्धाद्भासकं भवति। अपरोक्षज्ञानविषयेषु ह्यधिष्ठानस्फुरणसंभवाद्वृत्तिव्याप्यत्ववत्फलव्याप्यत्वमप्यस्ति। अनुमानादिपरोक्षज्ञानविष-

श्रृणोत्यनेन शब्दांश्च गन्धानाजिघ्रति प्रियान् ।
अनेनैव सदा वाचं व्याकरोति तु मानवः ॥ १८ ॥

येषु नैतादृशं फलव्याप्यत्वमस्तीति वृत्तिस्थमिति वदतोऽभिप्रायः । भानमात्ररूपस्य परशिवस्योपपादितं सर्वसाक्षित्वं निगमयति—तेनेति एवं जीवभावेन प्रविश्यावस्थितस्य परशिवस्य साक्षिचिन्मात्ररूपत्वं प्रसाधितम् । तथा च कतरः स आत्मेति श्रुत्या प्रागवतारितस्य प्रश्नस्य सर्वसाक्षी चिद्रूप एव स आत्मा न तु प्राण इति प्रतिवचनं जातम् । इममेवार्थं श्रुतिरुत्तररूपेण प्रतिपादयति । "येन वा पश्यति येन वा श्रृणोति येन वा गन्धानाजिघ्रति येन वा वाचं व्याकरोति येन वा स्वादु चास्वादु च जानाति" इत्यस्याः श्रुतेरर्थं संगृह्य प्रतिपादयपि—अतो रूपाणीत्यादिना । यत उक्तयुक्तिबलात् "तस्य भासा सर्वमिदं विभाति" इति श्रुतेश्चात्मा साक्षिरूपेण सर्ववस्त्ववभासकोऽतः कारणात्तेनैव सर्वावभासकपरशिवस्वरूपेणानेन सर्वसाक्षितया हृदयमध्येऽवस्थितेन चक्षुःसंप्रयुक्तरूपजनितमनोवृत्त्यभिव्यक्तेन चित्प्रकाशेनैव रूपाणि पश्यति ॥ १६ ॥ १७ ॥ तथा श्रोत्रसंप्रयुक्तशब्दजनितमनोवृत्त्यभिव्यक्तेनानेनैव चित्प्रकाशेन शब्दाञ्जानाति । गन्धानाजिघ्रतीत्याद्यप्येवं योज्यम् । सदा वाचमिति । व्याकर्तव्यशब्दविषयमनोवृत्त्यभिव्यक्तेनानेनैव चित्प्रकाशेन वागिन्द्रियद्वारा वाच्यं वाक्यं व्यवहरति । एतच्चान्यस्य पाणिपादादेरपि कर्मेन्द्रियस्योपलक्षकम् । अनेन स्वादु चेति । रसनेन्द्रियसंप्रयुक्तमधुरादिरसजनितमनोवृत्त्यभिव्यक्तेनानेनैव चित्प्रकाशेन स्वाद्वस्वादुविभागं जानाति । श्रुतिगतो वाशब्दश्चार्थे । एतदुक्तं भवति । चक्षुःश्रोत्रादिविभिन्नकरणजनितेषु रूपादिज्ञानेषु योऽयमनुगतश्चित्प्रकाशः स एव साक्षिरूप आत्मेति । नन्वेष हि द्रष्टा श्रोतेत्यादिश्रुतेरसावेवोपलब्धो योऽनुगतश्चित्प्रकाशः प्रदर्शितस्तस्य च पश्यतीत्यादिकर्तृवाचितिङाऽभिहितत्वादनेनेति कथं तृतीयान्तनिर्देशः । नैष दोषः । अन्तःकरणतद्वृत्तिपरिकल्पितभेदोपजीवनेन करणत्वोपचारात् । अत एव कठवल्लीष्वप्याम्नातम्—"येन रूपं रसं गन्धं शब्दान्स्पर्शांश्च मैथुनान् । एतेनैव विजानाति किमत्र परिशिष्यते । एतद्वै तत्" इति । आचर्यास्तु "प्रज्ञया वाचं समारुह्य वाचा सर्वाणि नामान्याप्नोति प्रज्ञया चक्षुः समारुह्य

अनेन स्वादु चास्वादु विजानाति च मानवः ।
शंकराख्यं तु विज्ञानं बहुधा शब्द्यते बुधैः ।
केचिद्धृदयमित्याहुर्ब्राह्मणा हे सुरोत्तमाः ॥ १९ ॥

---

चक्षुषा सर्वाणि रूपाण्याप्नोति " इति कौषीतकिश्रुतेरेकस्यैव प्रज्ञाशब्दाभिधेयान्तःकरणस्य वाक्चक्षुरादिनानाविधकरणभावेनावस्थानात्तस्य चान्तःकरणस्य प्रपदाभ्यां प्रविष्टस्य प्राणस्य च " यो वै प्राणः सा प्रज्ञा या वा प्रज्ञा स प्राणः " इत्येकत्वश्रुतेरुपलब्धिकरणत्वेन गुणभूतत्वात्प्राणोऽनात्मेति दर्शयितुं येन वा पश्यतीत्यादौ तृतीयान्तपदं चक्षुरादिभेदभिन्नान्तःकरणपरतया व्याख्याय यदेतद्धृदयं मनश्चेति हृदयमनःशब्दाभ्यां निश्चयरूपं संकल्पविकल्पात्मकमन्तःकरणं सकलेन्द्रियसाधारणं प्रतिपाद्यत इति चक्षुरादिजनितमनोवृत्तिलक्षणोपाधिप्राधान्यविवक्षया व्याकार्षुः । यथाऽऽहुः—एतेनान्तःकरणेनैकेन चक्षुर्भूतेन रूपं पश्यति श्रोत्ररूपेण शृणोति घ्राणरूपेण जिघ्रति वाग्भूतेन च वदति जिह्वाभूतेन रसयति स्वेनैव कल्पनारूपेण मनसा संकल्पयति हृदयरूपेणाध्यवस्यति । तस्मात्सर्वविषयव्यापकमेकमिदमन्तःकरणमिति ॥ १८ ॥ अत्र तु हृदयमनःशब्दावपि संज्ञानादिशब्दवन्नामत्वेन प्रतिपाद्येते उपधेयचित्प्राधान्यविवक्षया तानि च नामान्येवमाम्नातानि—"यदेतद्धृदयं मनश्चैतत्संज्ञानमाज्ञानं विज्ञानं प्रज्ञानं मेधा दृष्टिर्धृतिर्मतिर्मनीषा जूतिः स्मृतिः संकल्पः क्रतुरसुः कामो वश इति सर्वाण्येवैतानि प्रज्ञानस्य नामधेयानि भवन्ति " इति । एतानि च नामानि चिन्मात्रस्वरूपस्य परशिवस्य व्यवहर्तृपुरुषभेदापेक्षयैवैतावन्ति भवन्तीति तद्व्यवहर्तृपुरुषसंबन्धितयैव तानि नामानि संगृह्णाति—शंकराख्यं तु विज्ञानमित्यादिना । तु शब्दोऽवधारणे । यदेतन्नित्यस्वप्रकाशसाक्षिचिदात्मकं सर्वदा सर्ववस्त्ववभासकं भानं शंकराख्यं प्रागुपन्यस्तं तदेव हृदयमनःसंज्ञानादिशब्दैस्तत्तदुपाधिसंबन्धबलात्तत्तन्नाम्ना बहुधा विद्वद्भिर्गीयते न त्वस्माच्चिदात्मनो हृदयमनःप्रभृतिकं तत्त्वान्तरमित्यर्थः । हृदयमित्याहुरिति । हृद्यत इति व्युत्पत्त्या हृन्मध्यवर्त्यन्तःकरणं हृदयं तच्चात्राध्यवसायात्मकं विवक्षितम् । हृदयस्वरूपेणाध्यवस्यतीति तथात्वप्रतिपादकाचार्यभाष्ये च प्रागुदाहृतत्वादेवं निश्चयरूपान्तःकरणोपादानबलेन

मन इत्यपरे सन्तः संज्ञानमिति केचन ।
अज्ञानमिति विद्वांसः केचिद्वै स्वर्गवासिनः ॥ २० ॥
विज्ञानमिति चाप्यन्ये प्रज्ञानमिति केचन ।
मेधेति ब्राह्मणाः केचिद्दृष्टिरित्यपरे बुधाः ॥ २१ ॥
धृतिरित्यपरे प्राज्ञा मतिरित्यपि केचन ।
मनीषेति महाप्राज्ञा (ज्ञप्ति) जूतिरित्यपरे बुधाः ॥ २२ ॥
स्मृतिरित्यास्तिकाः केचित्संकल्प इति केचन ।
क्रतुरित्यपरे प्राज्ञाः काम इत्यपरे जनाः ॥ २३ ॥
वश इत्यास्तिकाः केचित्सर्वाण्येतानि संततम् ।

---

तदुपहितं प्रज्ञप्तिमात्रं ब्रह्मस्वरूपमपि हृदयशब्देन व्यवहरन्तीत्यर्थः ॥ १९ ॥ एवं मनःसंज्ञानादयोऽपि सत्त्वपरिणामरूपान्तःकरणस्य वृत्तिभेदश्चिन्मात्रस्य साक्षिण उपाधिभूताः । अतस्तदुपादानवशात्तस्य तानि नामधेयानीति योजनीयम् । उक्तं ह्याचार्यैः—इत्येवमाद्या अन्तःकरणस्य वृत्तय उपलब्धुः शुद्धप्रज्ञानरूपस्य ब्रह्मण उपाधिभूतास्तदुपाधिजनितगुणनामधेयानि संज्ञानादीनि । तत्र चाऽऽदावन्तःकरणस्य संकल्पविकल्परूपा वृत्तिर्मनः । संज्ञानं संज्ञप्तिर्योगादसौ चेतन इति व्यपदिश्यते । आज्ञानमाज्ञप्तिराज्ञाशक्तिरूपा वृत्तिः॥२०॥ विज्ञानं लौकिकसूक्ष्मवस्तुविषया वृत्तिः । प्रज्ञानं प्रज्ञप्तिः प्रज्ञा । यथोक्तम्—"स्मृतिस्त्वतीतविषया मतिरागामिगोचरा । बुद्धिस्तात्कालिकी प्रोक्ता प्रज्ञा त्रैकालिकी मता" इति । मेधा ग्रन्थधारणसामर्थ्यम् । दृष्टिश्चक्षुरादीन्द्रियद्वारा घटपटादिविषयाकारपरिणता वृत्तिः ॥ २१ ॥ धृतिर्देहेन्द्रियादिधारणसामर्थ्यम् । मतिर्मननमागामिविषया वृत्तिः । मनीषा मनस ईषा । तत्र स्वातन्त्र्यमिति यावत् । जूती रोगादिभिश्चेतसो दुःखित्वभावना ॥ २२ ॥ स्मृतिरनुभूतिविषया संस्कारजा वृत्तिः । संकल्प इदं शुक्लमिदं कृष्णमिति भेदेन सम्यक्कल्पनारूपः। क्रतुरिदमित्थमेवेत्यध्यवसायः। कामोऽसंनिहितविषयाकाङ्क्षा ॥ २३ ॥ वशः संनिहितस्रक्चन्दनस्त्र्यन्नपानादिविषयोऽभिलाषः ।

प्रज्ञानस्य शिवस्यास्य नामधेयान्यसंशयम् ॥ २४ ॥
एष ब्रह्मैष एवेन्द्र एष एव प्रजापतिः ।
एष एव हि देवाश्च भूतानि भुवनानि च ॥ २५ ॥
अण्डजा जारुजाश्चैव स्वेदजा उद्भिजा(ज्जा) अपि ।
अश्वा गावश्च मर्त्याश्च हस्तिपूर्वास्तथैव च ॥ २६ ॥

---

अत्रासुरिति श्रुत्युक्तं नाम प्राणवाचकतया प्रसिद्धत्वात्तदुपाधिकस्य प्रज्ञानब्रह्मणोऽप्रसिद्धमिति न पृथगुक्तम् ॥ २४ ॥ एवमन्तःकरणतद्वृत्त्युपहितं रूपशब्दादिसकलवस्त्ववभासकं नित्यस्वप्रकाशसाक्षिचैतन्यमेवाऽऽत्मेति प्रतिपादितम् । तस्यैव ब्रह्मादिस्तम्बान्ते स्थावरजङ्गमात्मके जगति जीवभावेनोपादानभावेन च सर्वत्रावस्थानाभिप्रायेण परिच्छेदभ्रमं व्युदसितुं श्रुतिः सार्वात्म्यं प्रतिपादयति—"एष ब्रह्मैष इन्द्र एष प्रजापतिरेते सर्वे देवा इमानि च पञ्च महाभूतानि पृथिवीवायुराकाश आपो ज्योतींषीत्येतानीमानि च क्षुद्रमिश्राणीव बीजानीतराणि चेतराणि चाण्डजानि च जारुजानि च स्वेदजानि चोद्भिज्जानि चाश्वा गावः पुरुषा हस्तिनो यत्किंचेदं प्राणि जङ्गमं च पतत्रि च यच्च स्थावरं सर्वं तत्प्रज्ञानेत्रं प्रज्ञाने प्रतिष्ठितम्" इति । इमां श्रुतिं संगृह्णाति—एष ब्रह्मेत्यादिना । यः प्रागुक्तः स्वप्रकाशः साक्षी चिद्रूप आत्मैष एव ब्रह्मा । अपञ्चीकृतपञ्चमहाभूततत्कार्यलिङ्गशरीरसमष्ट्युपहितः सन्हिरण्यगर्भपरपर्यायो ब्रह्मा भवतीत्यर्थः । यद्वा ब्रह्मेति नपुंसकलिङ्गतया पदविभागः । यत्परं ब्रह्म सत्यज्ञानादिलक्षणं जलतरङ्गबुदबुदादिष्वनुप्रविष्टसूर्यबिम्बवत् सर्वप्राण्यन्तःकरणोपाधिष्वनुप्रविष्ट एव तद्ब्रह्म नान्यदित्यर्थः । एवमुत्तरत्रापि योजना । परमैश्वर्ययोगादिन्द्रः । यद्वा इदंकारास्पदघटादिवदिदामित्यापरोक्ष्येण यः साक्षी स्वात्मभूतं ब्रह्म साक्षात्करोति स इन्द्रः । श्रूयते हि—"इदमदर्शमितीऽ३ । तस्मादिदन्द्रो नामेदन्द्रो ह वै नाम तमिदन्द्रं सन्तमित्याचक्षते परोक्षेण" इति । यद्वा देवानामधिपतिरिन्द्रस्तस्य हृदयेऽपि साक्षिरूपेणावस्थानादेष एव स इत्यर्थः । प्रजापतिः पञ्चीकृतस्थूलभूतारब्धब्रह्माण्डान्तर्वर्ती प्रथमशरीरी विराट् । देवा अग्न्यादयः। योऽयमन्तर्देहेऽवस्थितश्चिदात्मैष एव ब्रह्मेन्द्रादिदेहेष्वपि साक्षिरूपेणावस्थितः।

स्थावरं जङ्गमं चैव तथाऽन्यदपि किंचन।
सर्वमेतदयं शंभुः प्रज्ञानघनलक्षणः ॥ २७ ॥
प्रतिष्ठा सर्ववस्तूनां प्रज्ञैषा पारमेश्वरी।
प्रज्ञानमेव तद्ब्रह्म शिवरुद्रादिसंज्ञितम् ॥ २८ ॥

---

चित्प्रकाशसाम्येनैक्यप्रतिसंधानात्। तद्भेदप्रतीतिस्तूपाधिकृतेत्यर्थः। भूतानि भुवनानि चेति। सर्वशरीरोपादानभूतानि यानीमानि पृथिव्यादीनि पञ्च महाभूतानि तत्कार्यरूपाणि यानि च भुवनानि लोकास्तन्मध्ये वर्तमाना येऽण्डजाः पक्ष्यादयः। ये च जारुजा जरायुजा मनुष्यादयः। ये च स्वेदजाः स्वेदबिन्दुपरिणामरूपा यूकाद्याः। ये चोद्भिज्जा भूमिमुद्भिद्य जायमानास्तरुगुल्मादयः। एवं सामान्यतश्चातुर्विध्येन सर्वं जगन्निर्दिश्य विशेषतोऽपि निर्दिशति– अश्वा इति। हस्तिपूर्वा इति। हस्तिप्रमुखा प्राणिन इत्यर्थः ॥ २५॥२६ ॥ स्थावरमचलं वृक्षादिकम्। जङ्गमं पादगमनशीलम्। तथाऽन्यदपीति। पक्षाभ्यामाकाशे पतनशीलं यत्पतत्रि चेति श्रुत्युक्तं तदन्यशब्देन विवक्षितम्। एवं यदेतद्भूतभौतिकरूपं स्थावरजङ्गमात्मकं जगत्तत्सर्वं प्रज्ञानब्रह्मरूपे सर्वसाक्षिण्युत्पत्तिस्थितिलयाधिष्ठानेऽज्ञानपरिकल्पितत्वाद्रूपेण तेनैव प्रतीतिपथं नीयमानत्वाच्च वस्तुतस्तत्स्वरूपानतिरिक्तत्वान्निरन्तरप्रज्ञानघनलक्षणः परमेश्वर एव न तु ततोऽतिरिच्यत इत्यर्थः। सर्वं तत्प्रज्ञानेत्रमिति प्रतिज्ञातार्थस्य प्रतिपादनाय प्रज्ञानेत्रो लोक इति वाक्यम्। यतः सर्वोऽपि लोकः प्रज्ञानेत्रश्चिदधीनप्रवृत्तिकत्वादुदीरितप्रज्ञप्तिरूपसाक्षिनेत्रक एव परिदृश्यते अतस्तत्सर्वं जगत्प्रज्ञानेत्रमित्यर्थः ॥ २७ ॥ प्रज्ञाने प्रतिष्ठितमिति यत्सर्वसाक्षिभूतं प्रज्ञानमाधेयप्राधान्येन गुणभूततयाऽधिकरणत्वेन निर्दिष्टं तस्याऽऽधेयसकलजगदुपलक्षितस्य प्रज्ञानमात्रस्य मुख्यतया ज्ञेयत्वं द्योतयितुं पुनराधारप्राधान्येन निर्दिश्य तदनूद्य तस्य ब्रह्मात्मत्वं प्रतिपादयति श्रुतिः "प्रज्ञा प्रतिष्ठा प्रज्ञानं ब्रह्म" इति तदर्थं संगृह्णाति—प्रतिष्ठेति। पारमेश्वरी परमेश्वरस्यैव जीवभावेनावस्थानात्तत्संबन्धिनी या सर्वसाक्षिणी चित्सैषा प्रागुदीरितरीत्या सर्ववस्तूनां प्रतिष्ठाऽऽश्रयः। स्वाज्ञानपरिकल्पितसकलजगदुत्पत्तिस्थितिलया-

एवंरूपपरिज्ञानादेव मर्त्योऽमृतो भवेत् ।
न कर्मणा न प्रजया न चान्येनापि केनचित् ॥२९॥
ब्रह्मवेदनमात्रेण ब्रह्माऽऽप्नोत्येव मानवः ।
अत्र नास्त्येव संदेहस्त्रिवैः शपथयाम्यहम् ॥ ३० ॥

---

विकरणत्वात् । अत एव तैत्तिरीयके समाम्नातम्—"यतो वा इमानि भूतानि जायन्ते । येन जातानि जीवन्ति । यत्प्रयन्त्यभिसंविशन्ति" इति । एवं सकलकल्पनास्पदं सर्वदा सर्ववस्त्ववभासकं यत्साक्षिरूपं प्रज्ञानं साधकस्य हृदयमध्य उपलभ्यत एतदेव शिवरुद्रादिसंज्ञितं तज्जगत्कारणं ब्रह्म यत् "आत्मा वा इदमेकएवाग्र आसीत्" इत्यात्मशब्देन निर्दिष्टम् । अयमर्थः। सोऽयं देवदत्त इत्यत्र परस्परविरुद्धतदेतद्देशकालसंबन्धवैशिष्ट्यं परित्यज्याविरुद्धस्य देवदत्तस्वरूपमात्रस्य यथैक्यप्रतिपत्तिस्तथैवात्र प्रत्यक्स्वप्रकाशसाक्षिचिद्वाचिना प्रज्ञानशब्देन जगत्कारणपरशिववाचिना ब्रह्मशब्देन च सामानाधिकरण्यान्यथानुपपत्त्या संसारसाक्षित्वजगत्कर्तृत्वादिविरुद्धधर्मवैशिष्ट्यत्यागेनोभयत्रानुगतं यच्चिदेकरसं प्रत्यस्तमितसर्वोपाधिविशेषं प्रत्यग्ब्रह्मणोः पारमार्थिकं स्वरूपं तस्यैक्यं प्रतिपाद्यतेऽज्ञानपरिकल्पितभेदभ्रमनिरासायेति ॥ २८ ॥ श्रुतौ "स एतेन प्रज्ञानात्मनाऽस्माल्लोकादुत्क्रम्य" इत्यादिना ब्रह्मात्मैक्यविज्ञानस्य यदमृतत्वसाधनत्वं प्रतिपादितं तत्संगृह्य ब्रूते । एवंरूपेति । वस्तुतः परशिवस्वरूपस्य प्रत्यगात्मनः संसारित्वस्य स्वस्वरूपयाथात्म्यापरिज्ञानमूलत्वादज्ञानस्य ज्ञानैकनिवर्त्यत्वाज्ज्ञानमेव ब्रह्मात्मैक्यलक्षणाया मुक्तेः साधनं न कर्मादिकम् । तस्याज्ञानकार्यत्वादविरुद्धत्वेन तन्निवर्तकत्वाभावात् । अत एव श्रुतिः कर्मादेरमृतत्वावाप्तिसाधनत्वं निषेधति—"न कर्मणा न प्रजया धनेन" इति॥ २९॥ ब्रह्मवेदनमात्रेणेति । मात्रग्रहणेन ज्ञानकर्मसमुच्चयस्यामृतत्वसाधनत्वानिरासः । प्रत्यगात्मनो ब्रह्मात्मैकत्वज्ञानमात्रेणैवाविद्यानिवृत्तौ निरतिशयानन्दरूपतया युगपत्सर्वकामनास्पदं ब्रह्मरूपं प्राप्नोत्येव । एतेन "सर्वान्कामानाप्त्वाऽमृतः समभवत्" इति श्रुतेरर्थो वर्णितो भवति । अन्यत्राप्याम्नातम्—"ब्रह्म वेद ब्रह्मैव भवति" "ब्रह्मविदाप्नोति परम्" इति च । ऐतरेयक-

तद्विद्याविषयं ब्रह्म सत्यज्ञानसुखाद्वयम् ।
संसारके गुहावाच्ये मायाऽज्ञानादिसंज्ञिते ।
निहितं ब्रह्म यो वेद परमव्योमसंज्ञिते ॥ ३१ ॥

श्रुतिव्याख्यानं समाप्तम् ॥ ३० ॥ एवमैतरेयोपनिषदर्थपर्यालोचनया कर्मादिनैरपेक्ष्येण ब्रह्मात्मैकत्वसाक्षात्कारस्य परमुक्तिसाधनत्वं प्रतिपाद्य तैत्तिरीयोपनिषदर्थपर्यालोचनयाऽपि तथात्वं प्रतिपादयितुं तदर्थं संगृह्य वक्तुमारभते—तद्विद्याविषयमित्यादिना तैत्तिरीयके हि—"ब्रह्मविदाप्नोति परम्" इति ब्रह्मप्रतिपिपादयिषया कृत्स्नोपनिषदर्थसूचनात्सूत्रभूतेनानेन वाक्येनाज्ञानतत्कार्योपाधिसंबन्धवशाज्जीवतामापन्नस्य साधनचतुष्टयसंपन्नस्य मुमुक्षोः प्रत्यक्चैतन्यस्य ब्रह्मवेदनमात्रेणाविद्यानिवृत्तिद्वारा निरतिशयानन्दाद्वितीयब्रह्मत्वावाप्तिस्तज्जिज्ञासाजननार्थं सूत्रिता। सूत्रितोऽर्थः संग्रहविस्तराभ्यां व्याख्यातः । तत्र श्रोतॄणां सुखावबोधाय संग्रहव्याख्यानमृगुदाहरणेन प्रदर्शितम् । सा चैवमाम्नाता—"सत्यं ज्ञानमनन्तं ब्रह्म" "यो वेद निहितं गुहायां परमे व्योमन्" "सोऽश्नुते सर्वान्कामान्सह ब्रह्मणा विपश्चिता" इति । तत्र जिज्ञासूनां देवानां पुनर्जिज्ञासाजनने प्रयोजनाभावात्तज्जनकं सूत्रभूतं वाक्यमुक्त्वोक्तवक्ष्यमाणसंगत्यभिधानपुरःसरं तस्या ऋचोऽर्थं संगृह्णाति—तदिति । सर्वसाक्षिभूतं यत्प्रज्ञानं तद्ब्रह्मेत्यमृतत्वसाधनभूतपरविद्याविषयतया यद्ब्रह्म निर्दिष्टं तद्ब्रह्म सत्यादिलक्षणम् । बृंहतिधात्वर्थस्यानुगमात् । तथाहि । बृहबृहि वृद्धाविति धातुर्वृद्धिमाचष्टे । सा चात्र प्रतियोगिविशेषानुपादानान्निरतिशयैव विवक्षिता । सति च वस्त्वन्तरे तेन परिच्छेदाद्वृद्धेर्निरतिशयत्वं भज्येत । तथाच वस्त्वन्तरकृतपरिच्छेदरहितमेव ब्रह्मशब्दवाच्यं भवितुमर्हति । द्वैतप्रपञ्चस्य तत्स्वरूपेऽध्यस्ततयैव प्रतीतेर्वस्तुतस्तत्स्वरूपानतिरिक्तत्वात् । तथाच वस्तुकृतपरिच्छेदनिराकरणेनैव देशकालकृतपरिच्छेदोऽपि निरस्तो वेदितव्यः । देशकालयोरपि परिकल्पितत्वेन वस्तुतस्तद्रूपानतिरेकात् । एवं द्वैतारोपस्याधिष्ठानत्वेन तद्बाधावधित्वेन च त्रिविधपरिच्छेदरहितं यदद्वितीयं तत्सत्यमेवैष्टव्यम् । इतरथा निरधिष्ठानभ्रमनिरवधिकबाधयोः प्रसङ्गात् । असतश्च सर्वप्रकारेणापि निरुपाख्यत्वेनाधिष्ठानावधित्वानुप-

पत्तेः। तच्च सत्यं सर्वदाऽप्रतिभातं चेन्नरविषाणसमं स्यात्। अतस्तत्प्रतिभातमेवेत्यर्थादापन्नम्। तथाच स्वप्रकाशमेव तत्परप्रकाश्यत्वे परेण वस्त्वन्तरेण परिच्छेदान्निरतिशयवृद्धिवाचकब्रह्मपदव्योकापः स्यात्। एवं ब्रह्मपदेन निरतिशयवृद्धिप्रतिपादनद्वारा यदानन्त्यादिकं सूचितं तच्छ्रुतिर्विविच्याऽऽचष्टे "सत्यं ज्ञानमनन्तं ब्रह्म" इति। एवंरूपस्य च ब्रह्मणोऽनन्यशेषतया वेद्यत्वप्रतिपादनादानन्दरूपस्य तथात्वानुपपत्तेर्निरतिशयसुखात्मकत्वमपि तस्य सिध्यति। अत एवाऽऽम्नायते–" आनन्दो ब्रह्मेति व्यजानात्" "विज्ञानमानन्दं ब्रह्म" इति च। तदिदमुक्तम्। सत्यज्ञानसुखाद्वयमिति। नन्वेतद्ब्रह्मणः स्वरूपलक्षणं सत्यादिशब्दाश्च सत्यत्वादिपरापरजातिप्रवृत्तिनिमित्तकाः कथं निर्भेदमेकरसमुक्तविधब्रह्मस्वरूपं प्रतिपादयितुं शक्नुवन्ति। नैष दोषः। सच्चिदानन्दैकरसे ब्रह्मणि परिकल्पितलौकिकसत्यज्ञानादिषु सत्यत्वादिपरापरजातिप्रवृत्तिनिमित्तकैरपि सत्यादिशब्दैः सत्यज्ञानानन्दैकरसव्यक्तेर्लक्षयितुं शक्यत्वात्। अनन्तपदं त्वन्तवत्त्वव्यतिरेकावच्छिन्नतयातत्स्वरूपं लक्षयति। न चैकेनैव पदेन लक्ष्यस्वरूपस्य विज्ञातत्वात्पदान्तरवैयर्थ्यमिति मन्तव्यम्। अनृतजडदुःखान्तवत्त्वव्यावृत्तिपरत्वेन सप्रयोजनत्वात्। यथाऽऽहुर्वार्तिककाराः—" तत्रानन्तोऽन्तवद्वस्तुव्यावृत्त्यैव विशेषणम्। स्वार्थार्पणप्रणाड्या तु परिशिष्टो विशेषणम्" इति। एवं वेद्यस्वरूपं प्रतिपाद्य वेदनप्रकारमाह—संसारक इति। संसरत्यनेनेति संसारः। संसार एव संसारकम्। अव्याकृतं कारणभूतं तस्मिन् कार्यभूताः सर्वे पदार्थाः भूतभविष्यद्वर्तमानलक्षणेषु त्रिष्वपि कालेष्वतीतानागतवर्तमानाद्यभेदैर्निगुह्य वर्तनाद्गुह्यन्ते संव्रियन्तेऽस्मिन्निति व्युत्पत्त्या तदव्याकृतं श्रुतिगतगुहाशब्देन वाच्यम्। तदेव विचित्रदुर्घटकार्यकरणात्स्वप्रकाशनिष्प्रपञ्चब्रह्मस्वरूपज्ञाननिवर्त्यत्वाच्च मायाज्ञानादिसंज्ञं भवति। आदिशब्देनाविद्या जडशक्तिरित्यादीनामपि संग्रहः। एतदेवाव्याकृतं परमव्योमसंज्ञितम्। "एतस्मिन्खल्वक्षरे गार्ग्याकाश ओतश्च प्रोतश्च यो वै स बहिर्धा पुरुषादाकाशो यो वै सोऽन्तःपुरुष आकाशः" इत्यादिश्रुत्यन्तरप्रसिद्ध्याऽव्याकृतस्य व्योमशब्दाभिधेयत्वात्। बाह्याकाशापेक्षया परमत्वं च वेदितव्यम्। एवं च गुहायां परमे व्योमन्निति श्रुतिगते समानाधिकरणे सप्तम्यन्तपदे। यथाऽऽहुर्भाष्य-

सोऽश्नुते सकलान्कामानक्रमेण सुरर्षभाः ।
विदितब्रह्मरूपेण जीवन्मुक्तो न संशयः ॥ ३२ ॥

---

कारा:—गुहायां परमे व्योमन्निति सामानाधिकरण्यादव्याकृताकाशमेव गुहा। तत्रापि निगूढाः सर्वपदार्थास्त्रिषु कालेषु कारणत्वादिति । तथाच कार्यकारणात्मना देहेन्द्रियादिरूपेण च परिणते पञ्चकोशात्मके तस्मिन्नव्याकृते निहितं स्थितमित्यर्थो भवति । उपलब्ध्यभिप्रायमेतत् । सर्वान्तरस्य निर्विशेषस्य ब्रह्मणो विशिष्टदेशसंबन्धानुपपत्तेः । एवमन्नमयप्राणमयादिवक्ष्यमाणपञ्चकोशरूपेणावस्थिते सत्वरजस्तमोगुणात्मकेऽव्याकृतेऽन्तर्निहितमुपलभ्यमानं सत्यज्ञानानन्दैकरसमद्वितीयं ब्रह्म यः प्रत्यगात्मस्वरूपत्वेन वेदान्तश्रवणमननादिसाधनजनितया तादृग्ब्रह्माकारमनोवृत्त्या साक्षात्करोति स इत्युपरिष्टात्संबन्धः॥३१॥ एवंभूतस्य ब्रह्मवेदनस्य फलमाह—सोऽश्नुत इति । काम्यन्त इति कामाः सुखोपभोगाः । स वेदिता सर्वान्कामानक्रमेण युगपदेकक्षणोपारूढानश्नुते प्राप्नोति । केन रूपेणेति चेदुच्यते। विदितब्रह्मरूपेण स्वात्मतया साक्षात्कृतेन निरावरणतया सर्वदा सर्वत्र सवितृप्रकाशवत्सर्ववस्त्ववभासकेन स्वयंप्रकाशमानेन चिद्रूपेण ब्रह्मणा रूपेण । ब्रह्मविदेवंभूतसर्वज्ञब्रह्मात्मकः संस्तत्त्वज्ञानेन भेदभ्रमहेतोरविद्यायाः समूलमुन्मूलितत्वात्स्वात्मनो निरतिशयानन्दाविर्भावेन तल्लेशभूतान्सर्वान्सुखविशेषानपि स्वरूपप्रकाशेन धर्मादिनिरपेक्षेण युगपद्वयाप्नोतीत्यर्थः । अक्रमेणेति वदता श्रुतिगतसहशब्दस्य न साहित्यमर्थोऽपि तु यौगपद्यमेवेत्यभिप्रायो वर्णितो भवति । तथा विदितब्रह्मरूपेणेति वदता ब्रह्मणा विपश्चितेति श्रुतिगततृतीयाऽपि पुत्रेण सहाऽऽगत इतिवन्न सहयोगलक्षणाऽपि तु श्वेतच्छत्रेण राजानमद्राक्षीदित्यादिवदित्थंभावे तृतीया व्याख्याता भवति। अत एव "आत्मा वा इदमेक एवाग्र आसीत्" "एको देवः सर्वभूतेषु गूढः" इत्यादि श्रुतिभिरात्मनः पारमार्थिकैकत्वप्रतिपादनान्नानाविधशरीरेषु तन्नानात्वप्रतीतेश्च घटाकाशो मठाकाश इतिवदौपाधिकभेदकल्पनयाऽप्युपपत्तेः 'तत्सृष्ट्वा तदेवानुप्राविशत्' "अनेनजीवेनाऽऽत्मनाऽनुप्रविश्य नामरूपे व्याकरवाणि" इत्यादिश्रुत्यैकस्यैव स्रष्टुरात्मनो जीवभावेन नानाविधदेहप्रवेशनाच्च न वास्तवो जीवपरयोर्भेदो विद्यते । अतोऽत्र भेदोपजीविनी सहयोगलक्षणा

प्रत्यगज्ञानविज्ञानमायाशक्तेस्तु साक्षिणम् ।
एकं ब्रह्म च संपश्यन्साक्षाद्ब्रह्मविदुत्तमः ॥ ३३ ॥
ब्रह्मरूपात्मनस्तस्मादेतस्माच्छक्तिमिश्रितात् ।
अपञ्चीकृत आकाशः संभूतो रज्जुसर्पवत् ॥ ३४ ॥

---

तृतीया न युक्तेत्यभिप्रेत्य भाष्यकारैरप्येवं व्याख्यातम् । तथाहुः—किमस्मदादिवत्पुत्रस्वर्गादीन्पर्यायेण नेत्याह—सह युगपदेकलक्षणोपारूढानिति तेन सर्वज्ञरूपेण ब्रह्मणाऽश्नुत इति च । जीवन्मुक्त इति । उक्तब्रह्मात्मवित्प्रारब्धकर्मशेषेण प्राणेन्द्रियदेहादिकं धारयन्प्राकृतजनवदवस्थितोऽपि मुक्त एव न पुनस्तस्य बन्धाशङ्केत्यर्थः ॥ ३२ ॥ एवमृगक्षरानुसारेण तदर्थं प्रतिपाद्य फलितमर्थमाह—प्रत्यगिति । प्रत्यागात्मनो ब्रह्मरूपत्वाच्छादकमज्ञानं प्रत्यगज्ञानं विविधं ज्ञायतेऽनेनेति विज्ञानमन्तःकरणं तदुभयरूपेणावस्थिता सत्त्वरजस्तमोगुणात्मिका मायाशक्तिः कारणशरीरमित्याख्यायते । तस्याः साक्षित्वेन पञ्चकोशान्तर्वर्तमानो यश्चिन्मात्रस्वरूप आत्मा यच्च "सत्यं ज्ञानमनन्तं ब्रह्म" इति सत्यज्ञानानन्तानन्दैकरसं ब्रह्म तदुभयमेकं संपश्यन्नुक्तरीत्या संशयविपर्यासविरहेण सम्यक्साक्षात्कुर्वन् "ब्रह्मविदाप्नोति परम्" इत्यादिश्रुत्युक्तब्रह्मविद्भवतीत्यर्थः ॥ ३३ ॥ श्रुतौ सूत्रितस्यार्थस्य संग्रहव्याख्यानानन्तरं संभवच्छङ्कानिरासाय विस्तरव्याख्यानमपि कृतम् "तस्माद्वै" इत्यादिना "इत्युपनिषत्" इत्यन्तेन । तदितः परं संगृह्य प्रतिपाद्यते । तत्र तावत् "सत्यं ज्ञानमनन्तं ब्रह्म" इति यदानन्त्यं प्रतिज्ञातं तन्नोपपद्यते वियदादिभूतभौतिकप्रपञ्चलक्षणस्य परिच्छेदकवस्त्वन्तरस्य विद्यमानत्वादित्याशङ्क्य तदुपपादयितुं तत्सकाशात्सृष्टिमाह—ब्रह्मरूपेत्यादिना । एवं ह्याम्नायते—' तस्माद्वा एतस्मादात्मन आकाशः संभूतः । आकाशाद्वायुः । वायोरग्निः । अग्नेरापः । अद्भ्यः पृथिवी " इति । अस्याः श्रुतेरर्थं प्रतिपादयति—ब्रह्मेति । तस्माच्छब्देन श्रुतौ ब्रह्मविदाप्नोति परमिति व्यवहितसूत्रवाक्यनिर्दिष्टं ब्रह्म परामृश्यते । एतस्मादित्येतच्छब्देन सत्यं ज्ञानमनन्तं ब्रह्मेति संनिहितमन्त्रवाक्यनिर्दिष्टम् । असङ्गोदासीनस्य परमार्थतो निरवद्यस्य स्रष्टृत्वासंभव इत्यभिप्रेत्य तत्संभावनायाऽऽह—शक्तिमि-

श्रितादिति । प्राणिकर्मपरिपाकवशेन सिसृक्षितकार्यप्रपञ्चोन्मुखात्तत्स्वरूपपरिकल्पितत्वेन तदाश्रिता मायाशक्तिस्तन्मिश्रितात्तदुपाधिकादित्यर्थः । एवं मायाशक्तिबलाद्ब्रह्मरूपादात्मनः सकाशादपञ्चीकृतः सूक्ष्मशब्दगुणोऽवकाशात्मक आकाशः संभूतः समुत्पन्नः । पञ्चीकरणेन हि भूतानि स्थूलीभवन्ति । तथात्वं चाग्रे छान्दोग्योपनिषदर्थकथनप्रस्तावे प्रतिपादयिष्यते । निमित्तकारणवाचिशब्दादपि पञ्चमी भवति हेतौ विधानात् । तथोपादानकारणवाचिशब्दादपि " जनिकर्तुः प्रकृतिः " इति स्मरणात् । एवं चात्र तस्मादिति पञ्चमी तदुभयरूपा तन्त्रेणोपात्ता द्रष्टव्या । ब्रह्मैव हि कार्यस्य जगतो निमित्तमुपादानं च । " सोऽकामयत बहु स्यां प्रजायेय " इति कामयितृत्वेन स्वस्यैव बहुभावेन चाभिन्ननिमित्तोपादानस्याग्रे प्रतिपादितत्वात् । बादरायणोऽपि ब्रह्मण उभयरूपत्वं सूत्रयामास—" प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधात् " इति । ये त्वस्पर्शद्रव्यत्वादात्मवदाकाशस्य नित्यत्वं मन्यमानाः संभूत इत्यभिव्यक्तिपरतयोक्तमर्थमन्यथयन्ति ते बादरायणेनैव 'न वियदश्रुतेः' इत्यधिकरणे निराकृताः । ननु वियदादिकार्यप्रपञ्चेनैव वस्तुना ब्रह्मणः परिच्छेदः स्यात् । तथा ब्रह्मोपादानं सत्क्षीरदधिन्यायेन जगदाकारेण परिणमतेऽथवा मृद्घटन्यायेन जगदारभत इत्यनयोरन्यतरदङ्गीकर्तव्यम । तथाच ब्रह्मणोऽनित्यत्वादिप्रसक्तिरित्याशङ्क्याऽऽह—रज्जुसर्पवदिति । न खल्वत्राऽऽरम्भवादः परिणामवादो वा विवक्षितः । येनैवं प्रसज्येत । अपि तु विवर्तवाद एव विवक्षितः । यथा रज्जुः स्वयमविकृतैव सती मायया सर्पाकारेण विवर्तते । एवं ब्रह्मापि निर्विकारमेव सत्स्वमायाशक्तिविलासेन वियदादिजगदाकारेण विवर्तते । कारणस्वरूपाविरोधेन कार्यप्रतिभासो विवर्तः । अतो ब्रह्मणो निर्विकारत्वाविघातान्नानित्यत्वप्रसक्तिरित्यर्थः । अयमेवार्थो बादरायणेनापि 'कृत्स्नप्रसक्तिर्निरवयवत्वशब्दकोपोवा' इत्यत्र निर्णीतः । एवं ब्रह्माकारस्य वियदादिभूतभौतिकप्रपञ्चस्याधिष्ठाने ब्रह्मणि कारणे मायापरिकल्पितत्वेन रज्जुसर्पवदेवाधिष्ठानादव्यतिरिक्तत्वात् । यथाच मृत्कार्यं घटशरावोदञ्चनादिकं कारणभूतमृद्व्यतिरेकेणालब्धसत्ताकत्वात्पृथुबुध्नोदराकारादिरूपविशेषस्य तद्वाचकघटादिशब्दस्य च वाचारम्भणमात्रत्वात्का-

आकाशाद्वायुसंज्ञस्तु स्पर्शोऽपञ्चीकृतः पुनः ।
वायोरग्निस्तथा चाग्नेरापश्चाद्भ्यो वसुंधरा ॥ ३५ ॥
तानि भूतानि सूक्ष्माणि पञ्चीकृत्य शिवाज्ञया ।
तेभ्य एव सुराः सृष्टं ब्रह्माण्डाख्यमिदं मया ॥ ३६ ॥

रणमृन्मात्रमेव न तु ततोऽन्यत् । एवं ब्रह्मकार्यस्यापि कारणानन्यत्वाद्ब्रह्मणस्तत्कृतपरिच्छेदो न शङ्कनीय इत्यर्थः ॥ ३४ ॥ आकाशादिति । आरोपितस्याऽऽकाशादेरनिर्वाच्यत्वेन कार्यान्तराधिष्ठानत्वायोगात् "इदं सर्वमसृजत यदिदं किंच" "एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च । खं वायुर्ज्योतिरापः पृथिवी विश्वस्य धारिणी" इति विशेषेण सर्वस्यापि द्वैतप्रपञ्चस्य ब्रह्मकार्यत्वश्रवणाच्चाऽऽकाशादितत्कार्यविशेषारोपाधिष्ठानभूतं तदुपाधिकं ब्रह्मैवोपादानत्वेनाऽऽकाशादित्यादिभिः पञ्चम्यन्तैर्निर्दिश्यते । तस्मादात्मन आकाशरूपापन्नाद्ब्रह्मणः सकाशात्स्पर्शतन्मात्रापरपर्यायः सूक्ष्मो वायुः स्वकारणगुणेन शब्देन स्वगुणेन स्पर्शेन च गुणद्वयवान्समुत्पन्नः । वायोरग्निरिति । एवं वायुरूपापन्नाद्ब्रह्मणः स्वस्वकारणगुणाभ्यां शब्दस्पर्शाभ्यां स्वगुणेन रूपेण च गुणत्रयवान्सूक्ष्मोऽग्निः समुत्पन्नः । तथाच "वायोरग्निः" इति तैत्तिरीयके तेजसो वायूपादानत्वश्रवणात् । छान्दोग्ये च "तत्तेजोऽसृजत" इति सद्रूपब्रह्मोपादानश्रवणाच्च श्रुत्योर्मिथो विरोधादप्रामाण्यमितिशङ्का निरवकाशा तैत्तिरीयकेऽप्युक्तरीत्या ब्रह्मोपादानत्वस्याविघातात् । अत एव भगवान्व्यासोऽप्यमुमर्थमसूत्रयत् "तेजोऽतस्तथा ह्याह" इति । अग्नेराप इति । तस्माच्चाग्निरूपापन्नाद्ब्रह्मणः सकाशात्कारणगतैः शब्दाद्यैस्त्रिभिर्गुणैः स्वगुणेन रसेन च गुणचतुष्टयवत्य आपो जाताः। अद्भ्यो वसुंधरेति । अब्रूपापन्नात्तस्मादेव ब्रह्मणः कारणगतगुणचतुष्टयेन स्वगुणेन च गन्धेन पञ्चगुणा पृथिवी समुत्पन्ना ॥ ३५॥ श्रुतौ "पृथिव्या ओषधय ओषधीभ्योऽन्नमन्नात्पुरुषः" इति भौतिकभोक्तृप्रपञ्चसृष्टिराम्नाता तां संगृह्णाति—तानीति । परमेश्वरसृष्टानि वियदादिसूक्ष्मभूतानि तानि तदाज्ञयैव पञ्चीकरणेन स्थूलीकृत्य तत्कार्यभूतं ब्रह्माण्डादिकं मया निर्मितमिति ब्रह्मण उक्तिः । परशिवो हि स्वसृष्टवियदादिसूक्ष्मभूतोपाधिकः सन्हिरण्यगर्भो यः प्रथमः शरीरी प्रजापतिर्ब्रह्मेति च शब्दे-

भुवनानि विशिष्टानि निर्मितानि शिवाज्ञया ।
ब्रह्माण्डस्योदरे देवा देवाश्च विविधा अमी ॥ ३७ ॥
देवादयो मनुष्याश्च तथा पश्वादयो जनाः ।
तत्तत्कर्मानुरूपेण मया सृष्टाः शिवाज्ञया ॥ ३८ ॥
ततश्चान्नमयो ह्यात्मा विभिन्नश्चान्तरे स्वतः ।
अस्थिस्नाय्वादिरूपं यच्छरीरं भाति देहिनाम् ।
तस्मात्प्राणमयो ह्यात्मा विभिन्नश्चाऽऽन्तरो यतः ॥ ३९ ॥

---

ऽप्यपदिश्यते तत्कर्तृक एव हि सर्वो भौतिकः सर्गः । ब्रह्माण्डसर्गस्य मध्ये पृथिव्यादिलोकास्तेषु चौषधिवनस्पत्यादिकं सर्वं भोग्यजातं देवासुरमनुष्यादिभोक्तॄंश्चाहं सृष्टवानस्मीत्यर्थः । देवा इत्येकं संबोधनम् । देवादय इति । अत्र देवशब्दः कर्मदेवाभिप्रायः । अन्येषां देवानां देवा इति पदेन पृथक्प्रतिपादितत्वात् । तत्तत्कर्मानुरूपेणेति । तत्तत्प्राणिकृतपरिपक्वपुण्यपापनिवहस्य वैचित्र्येण तत्फलभूतविचित्रसुखदुःखोपभोगाय देवमनुष्यादिभेदेन नानाविधभोगायतनानि निर्मितानीत्यर्थः । सत्स्वपि सर्वेषु प्राणिषु पुरुषस्यैव विद्याधिकार इति तस्यैव सृष्टिः श्रुत्या प्रतिपादिता । अत एव तैत्तिरीयके पुरुषस्याऽऽकारपरिणतदेहमध्येऽवस्थितस्यैवाऽऽत्मनो ज्ञानविशेषाविर्भावेन विद्याधिकारः श्रूयते "पुरुषत्वे वाऽऽविस्तरामात्मा स हि प्रज्ञानेन संपन्नतमो विज्ञातं वदति विज्ञातं पश्यति वेद श्वस्तनं वेद लोकालोकौ मर्त्येनामृतमीप्सति" इति ॥३६-३८॥

अन्नपरिणामरूपपुरुषशरीरतादात्म्यापन्नस्याऽऽत्मनः सर्वान्तरब्रह्मरूपत्वं प्रतिपादयितुं बाह्याभ्यन्तरभावेनान्नमयप्राणमयमनोमयविज्ञानमयानन्दमयाख्याः पञ्च कोशाः प्रतिपत्तिसौकर्याय "स वा एष पुरुषोऽन्नरसमयः" इत्यादिना श्रुतौ प्रतिपादितास्तान्संगृह्णाति—अस्थीत्यादिना । तत्र तावज्जीवभावेनावस्थितस्य त्रीणि शरीराणि भवन्ति स्थूलसूक्ष्मकारणात्मना । तत्रान्नरसपरिणामरूपं षाट्कौशिकं स्थूलशरीरं तत्तादात्म्यापन्नोऽन्नमय आत्मा भवति । "स वा एष पुरुषोऽन्नरसमयः" इति श्रुतौ तच्छब्देन प्रकृतमात्मानं परामृश्य तस्यान्नमयत्वप्रतिपादनात् । एवं प्राणादिवक्ष्यमाणकोशतादात्म्येन प्राणमयादित्वमपि

**योऽयं प्राणमयो ह्यात्मा भाति सर्वशरीरिणाम् ।**
**ततो मनोमयो ह्यात्मा विभिन्नश्चाऽऽन्तरत्वतः ॥ ४० ॥**

तस्याऽत्मनोऽधिगन्तव्यम् । तस्य चान्नपरिणामरूपस्य स्थूलशरीरस्याऽऽत्मत्वोपदेशेन स्वशरीरादन्यस्य पुत्रमित्रकलत्रादेरात्मत्वभ्रमो निवर्तितः । तस्य मध्येऽपि सूक्ष्मभूतारब्धं यत्सप्तदशकं लिङ्गं तदात्मनः सूक्ष्मशरीरं तदुभयस्य हेतुभूता या मलिनसत्त्वप्रधानाऽविद्या सुषुप्ताववभासते सा तस्याऽऽत्मनः कारणशरीरम् । तत्र सूक्ष्मशरीरे प्राणमयमनोमयविज्ञानमयाख्यकोशत्रयान्तर्भावः । आनन्दमयस्तु कारणशरीरमिति विवेकः सत्त्वरजस्तमोगुणात्मकमायाकार्यत्वाद्भूतान्यपि गुणत्रयात्मकानि । तत्र वियदादिसूक्ष्मभूतानां ये पञ्च रजोंशास्तैरारब्धानि वाक्पाणिपादादीनि पञ्च कर्मेंद्रियाणि । तद्रजोंशसमुदायारब्धः प्राणनादिक्रियाहेतुः क्रियाशक्त्यात्मकः प्राणस्तस्य प्राणापानाद्याः पञ्च वृत्तयः। एवं पञ्चप्राणकर्मेन्द्रियरूपप्राणमयकोशविशिष्टस्याऽऽत्मन उपदेशेन बाह्यस्यानात्मत्वं प्रतिपादयति श्रुतिः "तस्माद्वा एतस्मादन्नरसमयादन्योऽन्तर आत्मा प्राणमयः" इति । तदेवाऽऽह—अस्थीति । अन्नमयस्याऽऽत्मन उपाधिभूतं यदस्थिस्नाय्वादिरूपमन्नकार्यं षाट्कौशिकं शरीरं तस्मात्सकाशादुदीरितप्राणमयकोशविशिष्ट आत्मा विभिन्न एव ज्ञातव्यः । यतः कारणादयमान्तरोऽन्तरे देहमध्ये वर्तमानोऽनुभूयते । अतो बाह्याद्देहात्प्राणमय आत्मा विवेकेन प्रत्येतव्य इत्यर्थः । अत एवासिकोशवद्बहिराच्छादकत्वसामान्यादन्नविकारस्य देहस्य कोशत्वम् । एवमुत्तरत्रापि मनोमयाद्यात्मोपदेशेन पूर्वस्य पूर्वस्य बाह्यतया विविक्तत्वेनाऽऽत्मत्वभ्रमनिरासात्कोशरूपत्वमवगन्तव्यम् ॥ ३९ ॥

एवं प्रणमयोपदेशेन बाह्यस्यान्नमयस्यानात्मत्वं प्रतिपाद्य प्राणमयस्यापि कोशरूपत्वेनानात्मत्वं प्रतिपादयितुं तस्मादप्यान्तरं मनोमयात्मानमुपदिशति श्रुतिः—तस्माद्वा एतस्मात्प्राणमयादन्योऽन्तर आत्मा मनोमयः" इति तत्संगृह्णाति—योऽयमिति। वियदादिपञ्चसूक्ष्मभूतसत्त्वांशैरारब्धानि श्रोत्रादीनि पञ्च ज्ञानेन्द्रियाणि तत्सत्त्वांशसमुदायपरिणामरूपमन्तःकरणं तदुपादानभूतस्य सत्त्वस्यात्मस्वरूपभूतसुखप्रकाशाभिव्यञ्जकसामर्थ्यसद्भावात्तत्कार्यमन्तःकरणमपि स्वरूपसुखाभिव्यञ्जकवृत्त्यात्मना स्वरूपप्रकाशाभिव्यञ्जकवृत्त्यात्मना च द्विधा परिण-

योऽयं मनोमयो ह्यात्मा भाति सर्वशरीरिणाम्।
विज्ञानमय आत्मा च ततोन्यश्चाऽऽन्तरो यतः ॥ ४१ ॥
विज्ञानमय आत्मा यो विभाति सकलात्मनाम्।

---

मते। तत्र प्रकाशाभिव्यञ्जिका वृत्तिरपीषद्रजोनुवेधात्संकल्पविकल्पात्मिका मनःसंज्ञां लभते। रजःसंस्पर्शविरहाच्च नैर्मल्ये सति निश्चयरूपा सती बुद्ध्याख्यां लभते। एवं मनोबुद्धिभेदभिन्नवृत्तिमदन्तःकरणसहकृतानि चक्षुरादीन्द्रियाण्यपि विमर्शनिश्चयरूपद्विविधज्ञानजनकत्वेन द्विविधानि भवन्ति। तत्र विमर्शज्ञानजनकपञ्चज्ञानेन्द्रियसहितमनःसंज्ञकवृत्तिमदन्तःकरणोपाधिविशिष्ट आत्मा मनोमयः। स च प्रागुक्तात्प्राणापानादिसंघात्प्राणमयादान्तरत्वेन विभिन्नः। तत्र हेतुमाह—आन्तरत्वत इति। अन्तरवस्थितात्मस्वरूपचैतन्याभिव्यञ्जकत्वलक्षणात्स्वभावभेदादान्तरत्वमित्यर्थः। प्राणमयस्तु रजःपरिणामरूपत्वान्नोदीरितं चित्प्रकाशमभिव्यनक्ति। अत एव सुषुप्तौ सत्यामपि प्राणवृत्तौ जाग्रद्वच्चैतन्यस्य विशेषाभिव्यक्तिर्न दृश्यते। उच्छ्वासनिःश्वासादिक्रियाप्रवर्तकः सन्नन्नमयदेहस्य धारणमेव केवलं करोति। तथा च प्राणवाक्यम् "अहमेवैतत्पञ्चधाऽऽत्मानं प्रविभज्यैतद्बाणमवष्टभ्य विधारयामि" इति। एवमनयोर्विविक्तरूपत्वान्मनोमय आत्मा प्राणमयादान्तरो विविक्तश्च प्रत्येतव्य इति भावः ॥ ४० ॥ एवं प्राणमयस्य बाह्यत्वे कोशरूपत्वादनात्मत्वं प्रसाध्य मनोमयस्यापि तथात्वं प्रतिपादयितुं अस्मादप्यान्तरं विज्ञानमयमात्मानमुपादिशति श्रुतिः—"तस्माद्वा एतस्मान्मनोमयादन्योऽन्तर आत्मा विज्ञानमयः" इति तत्संगृह्णाति योऽयं मनोमय इति। प्रागुदीरितरीत्या निश्चयज्ञानजनकचक्षुरादीन्द्रियसहितबुद्ध्याख्यवृत्तिमदन्तःकरणविशिष्ट आत्मा विज्ञानमयः। विज्ञायतेऽनेनेति विज्ञानमुक्तविधमन्तःकरणं तन्मयस्तद्विकारः। स च विमर्शरूपान्मनोमयादान्तरत्वेन विभिन्नः। आन्तरत्वं च रजःसंस्पर्शविरहेणान्तरवस्थितात्मचैतन्यस्य निश्चयरूपेण विशेषतस्तत्राभिव्यक्तेः। अनुष्ठेयपदार्थविषयनिश्चयज्ञानवत एव विद्याकर्मणोरधिकार इत्यभिप्रेत्य विज्ञानमयात्मनो यज्ञादिक्रियाहेतुत्वमाम्नायते—"विज्ञानं यज्ञं तनुते कर्माणि तनुतेऽपि च" इति ॥ ४१ ॥ मनोमयवद्विज्ञानमयस्यापि बाह्यत्वेनानात्मत्वं प्रतिपाद-

आनन्दमय आत्मा च ततोऽन्यश्चाऽऽन्तरो यतः ॥४२॥

यितुमस्माद्प्यान्तरमानन्दमयमात्मानं श्रुतिरुपदिशति "तस्माद्वा एतस्माद्विज्ञानमयादन्योऽन्तरआत्माऽऽनन्दमयः इति "तत्संगृह्णाति–विज्ञानमय इति। विद्याकर्मणोः फलभूतं सुखमानन्दस्तदभिव्यञ्जकोपाधिविशिष्ट आत्माऽऽनन्दमयः। स च फलरूपत्वेनान्तरङ्गत्वादफलरूपाद्विज्ञानमयादान्तरो विविक्तश्च स एवाऽऽत्मत्वेन बोद्धव्यः। विज्ञानमयस्तु तत्फलसाधनभूतविद्याकर्मनिष्पादकतया बहिरङ्गत्वाद्बाह्योऽनात्मा। एवं प्राणमयादिकोशत्रयस्य विवेकेनाऽऽत्मनः सूक्ष्मशरीरादपि विवेकः सिद्धो भवति। "ज्ञानेन्द्रियाणि पञ्चैव तथा कर्मेन्द्रियाण्यपि। वायवः पञ्च बुद्धिश्च मन सप्तदशं विदुः" ॥ इति हि सूक्ष्मशरीरस्वरूपम्। एतस्यैव सप्तदशकस्य प्राणमायादिकोशत्रयरूपेणावस्थितस्य प्रतिपादितत्वात्। एवं स्थूलसूक्ष्मशरीराभ्यामात्मनः सिद्धेऽपि विवेक कारणशरीरादपि तस्य विवेकेन भवितव्यं तदर्थमिदं चिन्तनीयम्। किमानन्दमय एव सर्वान्तर आत्मेत ततोऽप्यान्तरमन्यद्ब्रह्मास्ति तदेव सर्वान्तरमात्मत्वेनाभिमतम्। आनन्दमयस्त्वन्नमयादिवत्सोपाधिक एवेति। तत्रान्योऽन्तर आत्माऽऽनन्दमय इतिवदस्मादन्यस्याऽऽन्तरस्याऽऽत्मनोऽनुपदेशान्मयटो विकारप्रायपठितस्य तद्बाधेन प्राचुर्यार्थतयाऽप्युपपत्तेः प्रियशिरस्त्वादीनां चोपाधित्वेनाप्यस्मिन्संभवात् "यदेष आकाश आनन्दो न स्यात्" "सैषाऽऽनन्दस्य मीमांसा भवति" इत्याद्यानन्दशब्दाभ्यासस्य "वसन्ते वसन्ते ज्योतिषा यजेत" इति ज्योतिःशब्दस्य ज्योतिष्टोमप्रतिपादकत्ववदानन्दमयपरत्वेन योजयितुं शक्यत्वादभ्यस्यमानः स एव सर्वान्तर आत्मेति चेत्। मैवम्। 'ब्रह्म पुच्छं प्रतिष्ठा' इत्यानन्दमयादिसर्वाधारस्य सर्वान्तरस्य ब्रह्मण उपदेशात्तस्यैवात्र प्राधान्येन विवक्षितम्। "ब्रह्मविदाप्नोति परम्" इति फलवद्ब्रह्मात्मज्ञानं प्रक्रम्य "सत्यं ज्ञानमनन्तं ब्रह्म" "ब्रह्मणा विपश्चितेति" "अस्ति ब्रह्मेति चेद्वेद" इत्येवमभ्यस्यमानत्वात्। अभ्यासो हि तात्पर्यलिङ्गम्। "उपक्रमोपसंहारावभ्यासोऽपूर्वताफलम्। अर्थवादोपपत्ती च लिङ्गं तात्पर्यनिर्णये" इत्युक्तत्वात्। ब्रह्मशब्दोऽप्यपरिच्छिन्ने निर्विकारे ब्रह्मणि मुख्यः न तु सावयव आनन्दमये। न चैतस्य "ब्रह्म पुच्छं प्रतिष्ठा" 'इत्यानन्दमयावयवत्वश्रवणादप्राधान्यमिति मन्तव्यम्। ब्रह्म पुच्छमिति

**योऽयमन्नमयः सोऽयं पूर्णः प्राणमयेन तु ।**
**मनोमयेन प्राणोऽपि तथा पूर्णः स्वभावतः ॥ ४३ ॥**

पदद्वयरूपाद्वाक्यात्प्रतीयमानस्यावयवत्वस्य ब्रह्मपदश्रुत्या बाधात्। श्रुतेर्हि वाक्याद्बलीयस्त्वात्। आनन्दशब्दाभ्यासः सोऽपि निरतिशयनिर्विकारसुखरूपे ब्रह्मणि मुख्यः "विज्ञानमानन्दं ब्रह्म" "आनन्दो ब्रह्मेति व्यजानात्" इत्यादिश्रुतिप्रसिद्धेः। यद्यत्राऽऽनन्दमय एव सर्वान्तर आत्मा स्यात् "असन्नेव स भवति। असद्ब्रह्मेति वेद चेत्"। इति श्लोकोदाहरणमसंगतं स्यात्। तथा "एतमानन्दमयमात्मानमुपसंक्रामति" इत्यन्नमयादिवदुपसंक्रमितत्वप्रतिपादनं नोपपद्येत। अन्यस्योपसंक्रमितव्यस्याभावात्। तस्माद्ब्रह्मैव सर्वान्तरं स्वप्राधान्येन निर्दिष्टमित्यङ्गीकर्तव्यम्। पुच्छशब्दस्त्ववयवप्रायपठितोऽप्याधारत्वमात्रलक्षकः। एवं चाऽऽनन्दमय इति मयटो विकारप्रायपाठोऽनुगृहीतो भवति। तस्मादन्नमयादिवदानन्दमयोऽप्युपाधिविशिष्ट इति सिद्धम्। एतच्चाऽऽनन्दमयोऽभ्यासादित्यधिकरणे निर्णीतम्। स चोपाधिः प्रागुदीरितसात्त्विकान्तः करणपरिणामरूपाऽऽत्मस्वरूपसुखाभिव्यञ्जिका वृत्तिः। सा च प्रियमोदादिभेदेन बहुधा भिद्यते। निरतिशयानन्दो ह्यात्मनः स्वरूपम्। तच्च शुभकर्मोपस्थापितेष्टपुत्रवित्तकलत्रादिदर्शनलाभोपभोगजनितैः प्रियमोदादिसंज्ञकैरन्तःकरणवृत्तिविशेषैरभिव्यज्यते। अभिव्यक्तं च तद्विषयसुखमिति लोको व्यवहरति। तत्र क्षणिकत्वप्रतीतिस्तु व्यञ्जकोपाधिकृता। तथाविधाश्च वृत्तयः स्वापप्रलयादौ स्वकारणे सत्त्वे लीयन्ते। तथाच कारणात्मनाऽवस्थितं तथाविधवृत्तिकं मलिनसत्त्वप्रधानमविद्यापरपर्यायं भावरूपाज्ञानमेवाऽऽनन्दमयोपाधिर्विवक्षितः। स चाऽऽनन्दोऽन्तःकरणवृत्तिविशेषेऽभिव्यज्यते। तथा विविक्ते प्रसन्नेऽन्तःकरण आनन्द इति च वदतो भाष्यकारस्यापि कारणसत्त्वपरत्वमेवाभिप्रेतोऽर्थ इति व्याख्येयम्। ये त्वन्यथा व्याचक्षते तेषां तथाविधादज्ञानाद्विवेको न कृतःस्यात्। ईदृग्विधोपाधिविशिष्टो योऽयमानन्दमयः सोऽयं प्रागुक्तरीत्या विज्ञानमयादान्तरो ज्ञातव्य इत्यर्थः ॥ ४२ ॥ एवं पञ्च कोशाः प्रतिपादिताः। तत्र बाह्यस्य बाह्यस्यान्नमयादेरान्तरेणाऽऽन्तरेण कोशेन यत्पूर्णत्वं श्रुतिः प्रतिपादयति "तेनैष पूर्णः स वा एष पुरुषविध एव" इति तत्संगृह्णाति—

तथा मनोमयो ह्यात्मा पूर्णो ज्ञानमयेन तु ।
आनन्देन सदा पूर्णस्तथा ज्ञानमयः सुराः ॥ ४४ ॥
तथाऽऽनन्दमयश्चापि ब्रह्मणाऽन्येन साक्षिणः ।
सर्वान्तरेण संपूर्णो ब्रह्म नान्येन केनचित् ॥ ४५ ॥
यदिदं ब्रह्म पुच्छाख्यं सत्यज्ञानाद्वयात्मकम् ।
स रसः सर्वदा साक्षान्नान्यथा सुरपुङ्गवाः ॥ ४६ ॥

---

योऽयमिति । योऽयं प्रतिपत्तिसौकर्याय शिरःपुच्छपक्षान्तरादिभेदेन परिकल्पितोऽन्नमयः कोशः सोऽयं स्वस्मादान्तरेण तथाविधपरिकल्पितावयवेन प्राणमयेन पूर्णः । यथा मूषाकारा प्रतिमा स्वात्मनिषिक्तेन द्रुतताम्रेण सर्वशः पूर्यते तद्वत् । एवमुत्तरत्रापि योजना ॥ ४३ ॥ ४४ ॥ ब्रह्मणाऽन्येनेति । यद्यप्यानन्दमयादन्योऽन्तर आत्मेति पृथङ्निर्देशो नास्ति तथाऽपि "ब्रह्म पुच्छं प्रतिष्ठा" इत्यानन्दमयाधारत्वेन निर्दिष्टं सत्यज्ञानादिलक्षणं स्वात्मनि मायापरिकल्पितान्नमयादिसकलानात्मवस्तुसाक्षिभूतं पञ्चकोशान्तर्गतं सर्वान्तरं यद्ब्रह्म यस्य च तादात्म्याध्यासादन्नमयादयोऽप्यात्मानः स्युस्तेन सर्वाधिष्ठानेन साक्षिचैतन्यरूपेण ब्रह्मणाऽऽनन्दमयोऽपि पूर्णो व्याप्तः । ब्रह्म नान्येनेति । उक्तविधं ब्रह्म तु देशकालवस्तुकृतत्रिविधपरिच्छेदराहित्येनाद्वितीयत्वादन्येन केनचिदपि वस्तुना न व्याप्तम् । स्वयमेव सर्वमापूर्यापरिच्छिन्नं तद्वर्तत इत्यर्थः ॥ ४५ ॥ एतावता निहितं गुहायामिति मन्त्रवाक्ये यद्गुहानिहितत्वं ब्रह्मणः प्रदर्शितं तद्व्याख्यातं भवति । तथाविधस्य सर्वान्तरस्य ब्रह्मणः प्रतिपत्त्युपायत्वेनान्नमयादिपञ्च कोशाः प्रतिपादिता न तूपासनार्थाः । ननु "येऽन्नं ब्रह्मोपासते ये प्राणं ब्रह्मोपासते" इत्यादिमन्त्रवाक्यादन्नमयादीनामुपासनाङ्गत्वं प्रतीयत इति चेत् । मैवम् । शाखान्तरीयस्योपासनाप्रकरणस्थस्य "अन्नाद्वै प्रजाः प्रजायन्ते" इत्यादिमन्त्रस्य श्रुत्या कोशत्वेन प्रतिपादितान्नप्राणादिसद्भावं द्रढयितुं तत्तत्कोशावसाने संवादत्वेनोदाहृतत्वात् । यद्यत्रैवोपासनाविधिः स्यात्तर्हि परमात्मनो मनोमयकोशोदाहृतश्लोकेऽप्युपास्तिचोदना श्रूयेत । न च श्रूयते । अतो मनोमयकोशस्य तावदुपदेशार्थत्वमेव न तूपासनार्थत्वं तत्सामान्याद-

एतमेव रसं साक्षाल्लब्ध्वा देही सनातनम् ।
सुखी भवति सर्वत्र नान्यथा सुरसत्तमाः ॥ ४७ ॥
असत्यस्मिन्परानन्दे स्वात्मभूतेऽखिलात्मनाम् ।
को जीवति नरो देवाः को वा नित्यं विचेष्टते ॥ ४८ ॥

त्रापि तथेत्यङ्गीकार्यम् । इतरथोपासनोपदेशरूपप्रतिपाद्यार्थभेदाद्वाक्यभेदः स्यात् । संभवति च तदैक्ये तद्भेदो न युक्तः "संभवत्येकवाक्यत्वे वाक्यभेदस्तु नेष्यते" इति न्यायात् । एवं सर्वान्तरं ब्रह्मोपदिश्य तस्य निर्विशेषत्वेन वाङ्मनसातीतत्वादसत्त्वमाशङ्क्य तन्निरासाय मन्त्रोऽयमुदाहृतः "असन्नेव स भवति । असद्ब्रह्मेति वेद चेत् । अस्ति ब्रह्मेति चेद्वेद सन्तमेनं ततो विदुः" इति । तत्र यद्यप्यसदेव ब्रह्म तथाऽपि तदस्तीति वेदनीयमित्येवंविधार्थस्य स्फुरणाच्छिष्यस्य संशयो भवति । किमसदेव ब्रह्मोत सदेवेति । तथा तस्य ब्रह्मणः सर्वगतत्वादविद्वानपि तद्ब्रह्म प्राप्नोति न वा । यदि न प्राप्नोति तत्सामान्याद्विद्वानपि तद्ब्रह्म न प्राप्नोति प्राप्नोति वेति । तावेतौ विद्वदविद्वद्विषयौ प्रश्नौ श्रुत्यैव प्रदर्शितौ । "उताविद्वानमुं लोकं प्रेत्य कश्चन गच्छति। आहो विद्वानमुं लोकं प्रेत्य कश्चित्समश्नुता३ उ" इति । अत्र प्लुतिर्विचारार्था । एतेषां त्रयाणामुत्तरभूता श्रुतिः "सोऽकामयत" इत्यादिका । तत्र रसरूपत्वाद्ब्रह्मणो यदस्तित्वं तत्प्रतिपादितं श्रुतौ "रसो वै सः रसं ह्येवायं लब्ध्वाऽऽनन्दी भवति" इति तत्संगृह्याऽऽह—यदिदमिति । "ब्रह्म पुच्छं प्रतिष्ठा" इति यदिदं पञ्चकोशान्तरेऽपरोक्षतया भासमानम् "सत्यं ज्ञानमनन्तं ब्रह्म" इत्युदीरितलक्षणं ब्रह्म सोऽयं मधुरादिरसवत्सर्वदा प्रत्यग्दृष्टिभिर्योगिभिः साक्षादव्यवधानेनाऽऽस्वादनीयत्वाद्रसः ॥ ४६ ॥ एतद्रसात्मकत्वमुपपादयति—एतमेवेति । आत्मज्ञो हि देही सनातनमनाद्यनन्तमेतमेवाऽऽत्मानं निरतिशयानन्दरूपतया रसात्मकं स्वात्मनि साक्षात्कृत्य सर्वेषु देशेषु सर्वेष्वपि कालेषु सुखी भवति । एतद्व्यतिरिक्तमधुराद्यनित्यबाह्यरसलाभे तु काचित्कदाचिदेव सुखित्वम् । अतो विद्वदनुभवबलादस्य रसात्मकत्वमतो रसत्वाद्ब्रह्मणोऽस्तित्वं सिद्धमित्यर्थः ॥ ४७ ॥ पुनरपि तत्साधनार्थं श्रूयते "को ह्येवान्यात्कः प्राण्यात्।

तस्मात्सर्वात्मनां चित्ते भासमानो रसो हरः।
आनन्दयति दुःखाढ्यं जीवात्मानं कृपाबलात्॥ ४९॥
यदा ह्येवैष एतस्मिन्नदृश्यत्वादिलक्षणे।
निर्भेदं परमेकत्वं विन्दते सुरसत्तमाः॥ ५०॥
तदैवाभयमत्यन्तं कल्याणं परमामृतम्।
स्वात्मभूतं परं ब्रह्म स याति स्वर्गवासिनः॥ ५१॥

---

यदेष आकाश आनन्दो न स्यादेष ह्येवाऽऽनन्दयाति" इति तत्संगृह्णाति—असत्यस्मिन्निति। यदि प्राणिनां शरीरमध्ये परमव्योमसंज्ञकेऽव्याकृताकाशे स्वात्मभूतो निरतिशयानन्दरूपोऽयमात्मा न स्यात्तर्हि को वा जन्तुर्जीवति प्राणधारणं करोति को वा प्राणनादिचेष्टां नित्यं कुर्यात्। तत्सत्ताव्यतिरेकेण तत्राऽऽरोपितस्य सत्त्वानुपपत्तेः। अत आरोपितकार्यसत्त्वानुपपत्त्या तत्कारणस्य ब्रह्मणः सत्त्वमङ्गीकर्तव्यमित्यर्थः॥ ४८॥ तस्मादिति। यस्मादेवमानन्दरूपो विद्यते तस्मात्सर्वप्राणिहृदय आपरोक्ष्येण भासमानं ब्रह्म रसशब्दाभिधेयं भवति। कुतोऽस्याऽऽनन्दरूपतेत्यत आह—आनन्दयतीति। यस्मादसौ संसारदुःखाभिभूतं जीवात्मानं तत्कृतधर्मानुरूपेण सुखयति तस्मादस्याऽऽनन्दरूपत्वम्। अत एव चान्यत्राऽऽम्नायते—"एतस्यैवाऽऽनन्दस्यान्यानि भूतानि मात्रामुपजीवन्ति" इति॥ ४९॥ भयाभयहेतुतयाऽपि ब्रह्मणः सत्त्वं समर्थितं श्रुतौ—"यदा ह्येवैष एतस्मिन्नदृश्येऽनात्म्येऽनिरुक्तेऽनिलयनेऽभयं प्रतिष्ठां विन्दते। अथ सोऽभयं गतो भवति। यदा ह्येवैष एतस्मिन्नुदरमन्तरं कुरुते। अथ तस्य भयं भवति" इति तत्संगृह्णाति—यदेति। अदृश्यत्वादीत्यादिशब्देन श्रुत्युक्तानात्म्यादिसंग्रहः। यदा खल्वेतस्मिन्साक्षिरूपे ब्रह्मणि। किंरूपे। अदृश्ये दृश्यप्रपञ्चरहिते। अनात्म्ये आत्मनः संबन्धित्वादात्म्यं स्थूलशरीरं तद्रहिते। अनिरुक्ते सूक्ष्मभूतारब्धत्वात्सूक्ष्ममपि तन्निरुच्यत इति निरुक्तं लिङ्गशरीरं तद्रहिते। श्रूयते हि—"न तस्य कार्यं करणं च विद्यते" इति। अनिलयने। निलीयतेऽस्मिन्कार्याकारणप्रपञ्च इति निलयनं भावरूपमज्ञानं कारणशरीरं तद्रहिते। एवंभूते ब्रह्मणि निर्भेदमहमस्यो ब्रह्मान्यदि-

यदा ह्येवैष एतस्मिन्नल्पमप्यन्तरं नरः ।
विजानाति तदा तस्य भयं स्यान्नात्र संशयः ॥ ५२ ॥
सर्वेषामात्मभूतं यद्ब्रह्म सत्यादिलक्षणम् ।
उदास्ते तत्सुरश्रेष्ठा यथाजातजनं प्रति ॥ ५३ ॥
सम्यग्ज्ञानैकनिष्ठानां तदेव परमं पदम् ।
तदा स्वात्मतया भाति केवलं कृपया सुराः ॥ ५४ ॥

---

त्वेवंविधभेदरहितं पारमार्थिकमेकत्वं श्रवणमननादिसाधनैः साधको विन्दते लभते तदैव तस्मिन्नेव समयेऽभयं भयरहितम् । भयहेतोर्भेदस्य निवृत्तत्वात् । भेदो हि भयहेतुः । "द्वितीयाद्वै भयं भवति" इति श्रुतेः । निरतिशयनिर्विकारानन्दरूपतयाऽत्यन्तशोभनं परमं सर्वोत्कृष्टममृतं कदाचिदप्यनश्वरमेवंभूतं परब्रह्म स ब्रह्मात्मैकत्वविद्याति प्राप्नोति ॥ ५० ॥ ५१ ॥ यदा खल्वेतस्मिन्नुक्तलक्षणे ब्रह्मण्यल्पमप्यन्तरं भेदं पश्यति तदा तस्याहमन्यः संसारी मत्तोऽन्यद्ब्रह्मेत्येवं भेददर्शिनस्तद्ब्रह्म भयं भयहेतुः स्यादित्यर्थः ॥५२॥ ननु ब्रह्मणः सर्वत्र साम्येनावस्थानात्पक्षपातायोगाच्च भेददर्शिनोऽप्यभयप्राप्तिः किं न स्यादिति तत्राऽऽह—सर्वेषामिति । भेददर्शिनामभेददर्शिनां च सर्वेषां हृदयमध्य आत्मत्वेनोपलभ्यमानं सत्यादिलक्षणं यद्ब्रह्म तन्मूर्खजनं प्रत्युदास्त उदासीनमेव भवति । अनधिकारिणं प्रत्युदासीनमेव ब्रह्म तस्य ब्रह्मजिज्ञासापराङ्मुखत्वान्न प्रकाशत इत्यर्थः ॥ ५३ ॥ ये त्वद्वितीयनिरतिशयानन्दब्रह्मात्मैकत्वविषयनिर्विचिकित्ससाक्षात्कारज्ञानैकनिष्ठास्तेषां पदं पदनीयं परमं सर्वोत्कृष्टं मायातत्कार्यातीतं तदेव केवलं ब्रह्म तदा तस्मिन्साक्षात्कारसमये स्वात्मभावेन कृपया भाति प्रकाशते। अत एवान्यत्राऽऽम्नायते—"नायमात्मा प्रवचनेन लभ्यो न मेधया न बहुना श्रुतेन । यमेवैष वृणुते तेन लभ्यस्तस्यैव आत्मा विवृणुते तनुं स्वाम्" इति ॥ ५४ ॥ यस्तु सत्यप्यधिकारे मननादिसाधनेन तत्स्वरूपं न साक्षात्करोति तस्याऽऽलस्योपहतस्य ब्रह्म भयकारणं स्यादित्याम्नातम्। "तत्त्वेव भयं विदुषोऽमन्वानस्य इति" तत्संगृह्णाति—तत्त्वेवेति । तदेव ब्रह्म तु साङ्गवेदाध्यायिनोऽपि ब्रह्मसाक्षात्कारनिमित्तं मन-

तत्त्वेवाधीतवेदस्य सहाङ्गैः सुरपुङ्गवाः ।
मननेन विहीनस्य भयहेतुः सदा भवेत् ॥ ५५ ॥
भीषाऽस्मात्पवते वायुर्भीषोदेति दिवाकरः ।
भीषाऽस्मादग्निरिन्द्रश्च मृत्युर्धावति पञ्चमः ॥ ५६ ॥
अस्यैवाऽऽनन्दलेशेन स्तम्बान्ताविष्णुपूर्वकाः ।
भवन्ति सुखिनो देवास्तारतम्यक्रमेण तु ॥ ५७ ॥
तत्तत्पदविरक्तस्य श्रोत्रियस्य प्रसादिनः ।
स्वरूपभूत आनन्दः स्वयं भाति पदे यथा॥ ५८ ॥

---

नमकुर्वाणस्य भयहेतुर्भवतीत्यर्थः ॥ ५५ ॥ उक्तं ब्रह्मणो भयहेतुत्वं द्रढयितुं श्रुतिर्मन्त्रान्तरमुदाहरति—"भीषाऽस्माद्वातः पवते भीषोदेति सूर्यः। भीषाऽस्मादग्निश्चेन्द्रश्च मृत्युर्धावति पञ्चमः" इति तदत्र संगृह्णाति—भीषेति। वाय्वादीनामखिलजगद्व्यवहारनिर्वर्तनेऽधिकृतानां महाप्रभाववतां देवानामपि ब्रह्म भयहेतुः किल किमु वक्तव्यमन्येषां प्राणिनां भयहेतुरिति भावः ॥५६॥ एवं भयाभयहेतुत्वादपि ब्रह्मणोऽस्तित्वं सिद्धम्। "यदेष आकाश आनन्दो न स्यात्। एष ह्येवाऽऽनन्दयाति" इति यन्निरतिशयानन्दरूपत्वं ब्राह्मणोऽस्तित्वसाधनायोपन्यस्तं तदुपपादनाय तल्लेशभूतं सार्वभौमादिहिरण्यगर्भान्तमुत्तरोत्तरं शतगुणभावेनावस्थितमानन्दप्रवाहं प्रतिपादयति श्रुतिः—"सैषाऽऽनन्दस्य मीमांसा भवति" इत्यादिना "स एको ब्रह्मण आनन्दः" इत्येवमन्तेन तत्संगृह्णाति—अस्यैवेति। ब्रह्मस्वरूपभूतो योऽयं निरतिशय आनन्दोऽस्यैवाऽऽनन्दस्यैकदेशेन ब्रह्मादिस्तम्बान्ताः सर्वे देहिनस्तत्तत्स्वरूपानन्दाभिव्यञ्जकोपाधिमहत्त्वाल्पीयस्त्वाभ्यां तरतमभावेनावस्थितमानन्दं प्राप्य सुखिनो भवन्तीत्यर्थः ॥ ५७ ॥ श्रुतौ सार्वभौमाद्यानन्दविशेषमुपन्यस्य तत्र तत्र "श्रोत्रियस्य चाकामहतस्य" इत्याम्नातं तदभिप्रायं संगृह्णाति—तत्तदिति। तेषु तेषु सार्वभौमादिपदेपूत्तरोत्तरं सातिशयत्वादनित्यत्वं परिज्ञाय ततो विरक्तस्यैषणात्रयविनिर्मुक्तस्य प्रसन्नचित्तस्य श्रवणमननादिसाधनकलापमनुष्ठितवतः

अयमेव शिवः साक्षादादित्यहृदये तथा ।
अन्येषां हृदये चैव भाति साक्षितया स्वयम् ॥ ५९ ॥
विहाय साक्ष्यं देहादि मायान्तं तु विवेकतः ॥
सर्वसाक्षिणमात्मानं यः पश्यति स पश्यति ॥ ६० ॥
रुद्रनारायणादीनां स्तम्बान्तानां च साक्षिणम् ।

श्रोत्रियस्य ब्रह्मविदोऽनवच्छिन्नानन्दब्रह्मरूपत्वश्रवणात्तल्लेशभूतः सार्वभौमादिभेदेन तरतमभावेनावस्थितः सर्वोऽप्यानन्दस्तस्य विदुषः स्वरूपभूत इति तत्तत्पदेऽवस्थितस्य सार्वभौमादेर्यथाऽऽनन्दविशेषोऽवभासते तथा विदुषोऽपि स्वयं साधनान्तरनैरपेक्ष्येण तथाविध आनन्दो भातीत्यर्थः ॥ ५८ ॥ एतेन सार्वभौमादिहिरण्यगर्भान्तं तरतमभावेनावस्थिता आनन्दविशेषा जलतरङ्गबुद्बुदादयः समुद्र इव यत्रैक्यं गतास्तदद्वितीयं ब्रह्म परिच्छेदकाभावान्निरतिशयानन्दरूपं भविष्यतीत्यभिप्रेत्य तत्सिद्ध्यर्थं जीवेश्वरभेदभ्रमं श्रुतिर्व्युदस्यति "स यश्चायं पुरुषे यश्चासावादित्ये स एकः" इति तत्संगृह्णाति—अयमेवेति । योऽयमाकाशादिकारणत्वेन निर्दिष्टो विदुषा स्वस्वरूपतया साक्षात्क्रियमाणो निरतिशयानन्दरूपः परशिव एष एवाऽऽदित्यहृदये । आदित्यो हिरण्यगर्भः "स त्रेधाऽऽत्मानं व्यकुरुताऽऽदित्यं तृतीयं वायुं तृतीयम्" इति श्रुतेः । तस्य प्रथमशरीरिणो हिरण्यगर्भस्य हृदये विशुद्धसत्त्वप्रधानमायोपाधिकः सन् । साक्षादिति व्यवधानाभावमाह । अनावृतज्ञानतया सर्वज्ञ ईश्वरो भातीत्यर्थः । तथैष एव परशिवोऽन्येषां जीवानां हृदये पञ्चकोशमध्ये मलिनसत्त्वप्रधानाविद्योपाधिकः किंचिज्ज्ञः संसारसाक्षित्वेन भाति ॥ ५९ ॥ एवं विरुद्धस्वभावयोरप्यनयोर्जीवेश्वरयोरैक्यप्रतिपत्तिप्रकारमाह—विहायेति । माया नामात्र सत्त्वरजस्तमोगुणात्मिका प्रकृतिः । सा चोदीरितजीवेश्वरोपाधिद्वयसाधारणरूपा । अतस्तच्छब्देन तदुभयमत्र विवक्षितम् । तथा चोभयत्र स्थूलशरीरादितत्कारणभूतमायापर्यन्तं सर्वज्ञत्वकिंचिज्ज्ञत्वादिविरुद्धधर्महेतुभूतं साक्ष्यत्वादनात्मेति विविच्य तत्परित्यज्य यदुभयत्रानुगतं साक्षिचिन्मात्ररूपमत एव परिच्छेदकाभावात्सर्वसाक्षिभूतं तदेकमेवेत्येवमैक्येन य आत्मानं पश्यति स यथार्थदर्शी ॥ ६० ॥

एवं तर्कप्रमाणाभ्यां यः पश्यति स पश्यति ॥ ६१ ॥
यस्यैवं तर्कमानाभ्यामस्ति विज्ञानमास्तिकाः ।
स लोकादखिलादस्माद्विभिद्याऽऽत्मानमात्मना ॥ ६२ ॥
अन्नादीनखिलान्कोशानाभासेन विभासितान् ।
उपसंक्रामतीशस्य प्रसादादेव केवलात् ॥ ६३ ॥

---

रुद्रनारायणादीनामिति । ते हि परशिवस्यावतारविशेषा लीलाविग्रहधारिणस्तेषामन्येषां जीवानां च साक्षिभूतं चिन्मात्रमुक्तरीत्या स्वात्मभावेन यः पश्यति स एव ब्रह्मवित् । एतेन सच्चिदानन्दरूपस्य परशिवस्य जीवेश्वरोपाधिकृतपरिच्छेदनिरासेन तस्यापरिच्छिन्ननिरतिशयज्ञानानन्दैकरसत्वमुपपादितं भवति। यद्यप्येतत्सौत्रपरपदतात्पर्यप्रतिपादकस्य सर्वान्कामानिति मन्त्रभागस्य व्याख्यानरूपत्वादन्ते समाम्नातव्यं तथाऽपि यदेष आकाश आनन्दो न स्यादित्युपन्यस्ततर्कसमर्थनार्थमत्रैव प्रसङ्गादाम्नातमिति द्रष्टव्यम् । एवमद्वितीयनिरतिशयनिर्विकारसच्चिदानंदैकरसस्य ब्रह्मणोऽस्तित्वप्रतिपादनादस्ति नास्तीति संशयो निराकृतः॥६१॥विद्वानपि न प्राप्नोति चेति प्रश्नस्योत्तरभूता श्रुतिः"स य एवं विद्वान् इत्यादिका" 'एतमानन्दमयमात्मानमुपसंक्रामति'इत्येवमन्ता । तदर्थं संगृह्णाति—यस्यैवमिति । यस्य खलु विदुष एवमुक्तप्रकारेण निरतिशयानन्दब्रह्मात्मैकत्वज्ञानमस्ति स ब्रह्मवित् दृष्टादृष्टेष्टविषयसमुदायरूपादखिलादस्माल्लोकात्पृथिव्यन्तरिक्षस्वर्गादिभेदभिन्नादनात्मप्रपञ्चादात्मानमात्मना बुद्ध्या विविच्यान्नमयात्मा भूत्वा पुनरपि विवेकेनाऽऽन्तरं प्राणमयाद्यात्मानमवलम्ब्य चिदाभासेन भासितस्य बाह्यस्यान्नमयादेरनात्मत्वं जानानोऽन्नमयादिपञ्चकोशेभ्योऽप्यान्तरं सर्वजगत्कल्पनास्पदं सत्यज्ञानानन्तानन्दैकरसं 'ब्रह्म पुच्छं प्रतिष्ठा' इति सर्वाधारत्वेन यन्निर्दिष्टं ब्रह्म तदुपसंक्रामति । साधकः परशिवार्पणबुद्ध्याऽनुष्ठितैर्यज्ञदानादिभिः प्रीणितस्य परमेश्वरस्य प्रसादेन विद्योदये सति भेदहेतोरविद्याया निवृत्तेस्तत्कृतभेदभ्रमनिरासात्सर्वगतत्वेन नित्यप्राप्तमपि ब्रह्म कण्ठगतचामीकरन्यायेन पुनःप्राप्नोतीत्यर्थः । एवं च विद्वानेव प्राप्नोतीति प्रतिपादनादविदुषोऽपि ब्रह्मप्राप्तिरस्ति वा न वेति प्रश्नोऽपि निराकृतो वेदितव्यः॥६२-६३॥

यतो वाचो निवर्तन्ते निमित्तानामभावतः ।
निर्विशेषे शिवे शब्दः कथं देवाः प्रवर्तते ॥ ६४ ॥
विशेषं कंचिदाश्रित्य खलु शब्दः प्रवर्तते ।
यस्मादेतन्मनः सूक्ष्मं व्यावृत्तं सर्वगोचरम् ॥ ६५ ॥

---

एवं वेदनमात्राद्ब्रह्मप्राप्तिप्रतिपादनेन 'ब्रह्मविदाप्नोति' इति सूत्रवाक्यभागस्तद्व्याख्यानरूपो "यो वेद सोऽश्नुते" इति मन्त्रभागश्च व्याख्यातो भवति । अद्वितीयनिरतिशयानन्दाभयब्रह्मप्राप्तिर्ज्ञानमात्रसाध्येत्यस्मिन्स्वप्रतिपादितेऽर्थे श्रुतिः संवादार्थं कञ्चिन्मन्त्रमुदाजहार । स चैवमाम्नातः—"यतो वाचो निवर्तन्ते, अप्राप्य मनसा सह । आनन्दं ब्रह्मणो विद्वान्न बिभेति कुतश्चन" इति तत्संगृह्णाति—यत इति । यतो यस्मादुक्तलक्षणादत्यन्तनिर्विकल्पकाद्ब्रह्मणः सकाशाद्वाचो निवर्तन्ते । अभिधातुमशक्ताः परावर्तन्त इत्यर्थः । कुत इत्यत आह—निमित्तानामिति । जात्यादीनि हि शब्दानां प्रवृत्तिनिमित्तानि तेषां प्रवृत्तिनिमित्तानां ब्रह्मण्यभावादित्यर्थः । एतदेवोपपादयति—निर्विशेष इति । यस्मात्, "अस्थूलमनण्वह्रस्वम्" इत्यादिश्रुत्या ब्रह्म निर्विशेषमवगम्यते । अतस्तथाविधे जात्यादिसकलधर्मरहिते कथमभिधावृत्त्या शब्दः प्रवर्तते । नैव प्रवर्तितुं शक्नोतीत्यर्थः ॥६४॥ विशेषं कंचिदिति । अभिधेयगतं कंचिद्विशेषं प्रवृत्तिनिमित्तत्वेनोपादायैव हि लोके शब्दः प्रवर्तते । अतस्तद्रहिते ब्रह्मणि शब्दप्रवृत्तिरयुक्तेत्यर्थः । सूक्ष्मं सूक्ष्मार्थग्राहकम् । सर्वेन्द्रियसहकारितया सर्वविषयगोचरमन्तःकरणमपि स्ववृत्तिभिः सह यस्मान्निर्विकल्पकाद्ब्रह्मणो व्यावृत्तं निवृत्तम् । ननु तन्निरस्तसमस्तोपाधिकं वाङ्मनसातीतं चेत्तत्सद्भावावेदकप्रमाणाविषयत्वान्नरशृङ्गवदसदेव स्यात् । नैष दोषः । अविषयस्यापि तस्य लक्षयितुं शक्यत्वात् । तथा हि सत्यज्ञानादिवाक्यं तावल्लोकसिद्धसत्यादिप्रतिपादनद्वारा यथोदीरितनिर्विशेषं ब्रह्म विधिमुखेन लक्षणया प्रतिपादयति । "अथात आदेशो नेति नेति" इत्यादिकं तु व्यतिरिक्तसकलनिषेधेन प्रपञ्चव्यतिरेकावच्छिन्नं तद्व्यतिरेकमुखेनाभिदधत्तद्व्यतिरेकविनिर्मुक्तं तत्स्वरूपं लक्षयति । न चेदमस्य वेदान्तवाक्यस्याज्ञातज्ञापकत्वेनोत्पत्तिविधिरूपत्वाद्विधौ लक्षणा न

यस्माच्छ्रोत्रत्वगक्ष्यादिखानि कर्मेन्द्रियाणि च।
व्यावृत्तानि पराग्वस्तुविषयाणि सुरोत्तमाः ॥ ६६ ॥
तद्ब्रह्माऽऽनन्दमद्वंद्वं निर्गुणं सत्यचिद्घनम्।
विदित्वा स्वात्मरूपेण न बिभेति कुतश्चन ॥ ६७ ॥

न्याय्येति स्थितेस्तत्र लक्षणा न युक्तेति वाच्यम्। प्रतिनियतवाच्यार्थत्यागेन विधौ लक्षणास्वीकारे लक्ष्यार्थस्यानियतत्वादनेकत्वेन संदेहः स्यादित्यभिप्रायेण हि विधौ लक्षणा न न्याय्येत्युच्यते। यत्र तु मुखान्तरेण संदेहो निवार्यते तत्र विधावपि लक्षणा न दुष्यति। यथाऽधर्मन्तर्वेद्यर्वं बहिर्वेदीति। एवमत्रापि व्यतिरिक्तसकलनिषेधादनेकत्वसंदेहाभावात्परिशेषेण तस्यैव लक्ष्यत्वसिद्धेर्विधावपि लक्षणा न दुष्टा। न च लक्ष्यत्वविशिष्टस्यैव ग्रहणान्निरुपाधिकस्य शब्दाविषयत्वमिति मन्तव्यम्। लक्ष्यत्वस्योपलक्षणत्वेन ग्राह्यकोटावननुप्रवेशात्। अतोऽत्र वागविषयत्वोक्तिरभिधावृत्त्यभिप्राया। अत एवोपनिषदेकवेद्यत्वमप्याम्नातम् "तं त्वौपनिषदं पुरुषं पृच्छामि" इति। विधिनिषेधमुखवाक्यद्वैविध्यात्तज्जनिता ब्रह्माकारमनोवृत्तिरपि द्वेधा भवति। तत्र विधिरूपवाक्यजनिता मनोवृत्तिः स्वोपादानबलेन निरुपाधिकं ब्रह्म विषयीकुर्वती तदवगमयति। न चैतावता निरुपाधिकस्य मनोवृत्त्यविषयत्वभङ्गः। मनोवृत्तेरेवोपाधेः सद्भावेनास्य सोपाधिकत्वात्। नाप्यवस्तुत्वम्। उपाधेरुपलक्षणत्वेन विषयकोटावननुप्रवेशात्। एवं विधिनिषेधमुखेन प्रवृत्तवाक्यजनितमनोवृत्तिरपि समस्तोपाधिव्यतिरेकावच्छिन्नं तद्ब्रह्म गोचरयन्ती तदवच्छेदकं व्यतिरेकं स्वात्मानं च कतकरजोन्यायेन निवर्तयति। एतदेवाभिप्रेत्याऽऽम्नायते—"मनसैवेदमाप्तव्यम्" इति। एवमुक्तरीत्योपाधिसंस्पर्शविधुरस्य निरस्तसमस्तोपाधिकस्यात्यन्तनिर्विकल्पकस्य वाङ्मनसातीतत्वं सिद्धम् ॥ ६५ ॥ पराग्वस्तुविषयाणीति। पराग्वस्तूनीदंकारास्पदानि शब्दादीनि विषयो येषां तानि तथोक्तानि। तथात्वं च कठैराम्नायते—"पराञ्चि खानि व्यतृणत्स्वयंभूः" इति॥ ६६॥ इत्थं यद्ब्रह्म वाङ्मनसातीतं तदद्वंद्वमद्वितीयं शीतोष्णादिसकलद्वंद्वनिर्मुक्तं च। अत एव निर्गुणं सत्यज्ञानानन्दैकरसमेवंरूपं ब्रह्म स्वात्मभावेन विदित्वा। ननु कथं तस्य वेदनं संभवति बुद्ध्यविषयत्वात्। नैष दोषः। व्यतिरेकावच्छिन्नं

एवं यस्तु विजानाति स्वगुरोरुपदेशतः।
स साध्वसाधुकर्मभ्यां सदा न तपति प्रभुः॥ ६८॥
तप्यतापकरूपेण विभातमखिलं जगत्।
प्रत्यगात्मतया भाति ज्ञानाद्वेदान्तवाक्यजात्॥ ६९॥
कर्ता कारयिता कर्म करणं कार्यमास्तिकाः।
सर्वमात्मतया भाति प्रसादात्पारमेश्वरात्॥ ७०॥
प्रमाता च प्रमाणं च प्रमेयं प्रमितिस्तथा।
सर्वमात्मतया भाति प्रसादात्पारमेश्वरात्॥ ७१
नियोज्यश्च नियोगश्च साधनानि नियोजकः।

---

तद्विषयीकुर्वता मनसाऽदूरविप्रकर्षेण व्यवस्थापयितुं शक्यत्वस्योपपादितत्वात्। एवं ज्ञानेनाद्वितीयनिष्प्रपञ्चस्वप्रकाशचिदानन्दब्रह्मात्मभावेनावस्थितो विद्वान्कस्माच्चिदपि न बिभेति। भयहेतोः स्वातिरिक्तस्य द्वितीयस्य वस्तुनोऽभावात्। चनशब्दोऽप्यर्थे श्रुतौ ॥६७॥ उक्तब्रह्मविदो यत्फलमाम्नातम् "एतꣳह वा न तपति किमहꣳसाधु नाकरवं किमहं पापमकरवम्" इति तदर्थं संगृह्णाति—एवमिति। योऽयमुक्तरीत्या गुरूपदेशक्रमेणाद्वितीयब्रह्मात्मवित्स ब्रह्मीभूतोऽकृतेन साधुकर्मणा पुण्येन कृतेन वाऽसाधुकर्मणा पापेन न तपति। स्वात्मानमिति शेषः। मूलाज्ञाननिवृत्त्या तद्विलसितस्य क्रियाकारकफलात्मकस्य प्रपञ्चस्यापि बाधितत्वात्। अज्ञानी हि मुमूर्षावस्थायां यज्ञदानादिशुभकर्माकरणात्स्वर्गाद्यप्राप्तिं स्वकृतपापफलनरकप्राप्तिं च मनसा समालोकयंस्ताभ्यां बिभेति। ज्ञानी तु भाविजन्मापादककर्मसंचयस्य ज्ञानाग्निना दग्धत्वाद्भाविजन्माभावेन न तपतीत्यर्थः॥ ६८॥ 'स य एवं विद्वानेते आत्मानं स्पृणुते' इति वाक्यस्यार्थमाह—तप्यतापकेति। तप्यस्तापक्रियाविषयो भोक्तृप्रपञ्चः। तापकानि साध्वसाधुकर्मादीनि। एवं द्वैविध्येनावस्थितमपि सर्वं जगदद्वितीयब्रह्मात्मैकत्वज्ञानाद्विदुषः स्वस्वरूपतयैव भाति न तु स्वातिरिक्तं किंचित्पश्यति येनासौ तप्येत ॥६९॥ अत्यल्पमिदमुच्यते क्रियाकारकलक्षणः

सर्वमात्मतया भाति प्रसादात्पारमेश्वरात् ॥ ७२ ॥
भोक्ता भोजयिता भोगो भोगोपकरणानि च ।
सर्वमात्मतया भाति प्रसादात्पारमेश्वरात् ॥ ७३ ॥
ग्राहकश्च तथा ग्राह्यं ग्रहणं सर्वतोमुखम् ।
सर्वमात्मतया भाति प्रसादात्पारमेश्वरात् ॥ ७४ ॥
अन्यथाज्ञानमज्ञानं संशयज्ञानमेव च ।
सर्वमात्मतया भाति प्रसादात्पारमेश्वरात् ॥ ७५ ॥
घटज्ञानं पटज्ञानं कुड्यादिज्ञानमेव च ।
सर्वमात्मतया भाति प्रसादात्पारमेश्वरात् ॥ ७६ ॥
घटः कुड्यं कुसूलं च पटः पात्रं च पर्वतः ।
सर्वमात्मतया भाति प्रसादात्पारमेश्वरात् ॥ ७७ ॥
पातालाद्याश्च लोकाश्च सत्यलोकादयोऽपि च ।
सर्वमात्मतया भाति प्रसादात्पारमेश्वरात् ॥ ७८ ॥
ब्रह्माण्डं तत्र क्लृप्तानामण्डानां शतकोटयः ।
सर्वमात्मतया भाति प्रसादात्पारमेश्वरात् ॥ ७९ ॥
समुद्राश्च तटाकाश्च नद्यः सर्वनदा अपि ।
सर्वमात्मतया भाति प्रसादात्पारमेश्वरात् ॥ ८० ॥
मेरुमन्दरपूर्वाश्च पर्वताश्च महत्तराः ।
सर्वमात्मतया भाति प्रसादात्पारमेश्वरात् ॥ ८१ ॥
वनानि वनदेशाश्च वन्यानि विविधानि च ।
सर्वमात्मतया भाति प्रसादात्पारमेश्वरात् ॥ ८२ ॥
वृक्षाश्च विविधाः क्षुद्रतृणगुल्मादयोऽपि च ।

सर्वमात्मतया भाति प्रसादात्पारमेश्वरात् ॥ ८३ ॥
आकाशादीनि भूतानि भौतिकान्याखिलान्यपि ।
सर्वमात्मतया भाति प्रसादात्पारमेश्वरात् ॥ ८४ ॥
शब्दस्पर्शादितन्मात्ररूपाणि सकलानि च ।
सर्वमात्मतया भाति प्रसादात्पारमेश्वरात् ॥ ८५ ॥
कृमिकीटपतङ्गाश्च क्षुद्रा अपि च जन्तवः ।
सर्वमात्मतया भाति प्रसादात्पारमेश्वरात् ॥ ८६ ॥
पशवश्च मृगाश्चैव पन्नगाः पापयोनयः ।
सर्वमात्मतया भाति प्रसादात्पारमेश्वरात् ॥ ८७
मनुष्याश्चैव मातङ्गा अश्वा उष्ट्राः खरा अपि ।
सर्वमात्मतया भाति प्रसादात्पारमेश्वरात् ॥ ८८ ॥
यक्षराक्षसगन्धर्वप्रमुखाः सिद्धकिन्नराः ।
सर्वमात्मतया भाति प्रसादात्पारमेश्वरात् ॥ ८९ ॥
कर्मदेवाश्च देवाश्च देवराजो विराट्स्वराट् ।
सर्वमात्मतया भाति प्रसादात्पारमेश्वरात् ॥ ९० ॥
अहं च मद्विभूतिश्च मम भक्ताश्च देहिनः ।
सर्वमात्मतया भाति प्रसादात्पारमेश्वरात् ॥ ९१ ॥
विष्णुर्विष्णुविभूतिश्च विष्णुभक्ताश्च देहिनः ।
सर्वमात्मतया भाति प्रसादात्पारमेश्वरात् ॥ ९२ ॥
रुद्रो रुद्रविभूतिश्च रुद्रभक्ताश्चदेहिनः ।
सर्वमात्मतया भाति प्रसादात्पारमेश्वरात् ॥ ९३ ॥
ईश्वरस्तद्विभूतिश्च तदीयाः सर्वदेहिनः ।

सर्वमात्मतया भाति प्रसादात्पारमेश्वरात् ॥ ९४ ॥
सदाशिवसमाख्यस्तु शिवस्तस्य विभूतयः।
सर्वमात्मतया भाति प्रसादात्पारमेश्वरात् ॥ ९५ ॥
दिशश्च विदिशश्चैव साभ्रं नक्षत्रमण्डलम्।
सर्वमात्मतया भाति प्रसादात्पारमेश्वरात् ॥ ९६ ॥
वासुदेवः संकर्षणः प्रद्युम्नश्चानिरुद्धकः।
सर्वमात्मतया भाति प्रसादात्पारमेश्वरात् ॥ ९७ ॥
मत्स्यः कूर्मो वराहश्च नारसिंहोऽथ वामनः।
तद्भक्ताश्च तथा भान्ति प्रसादात्पारमेश्वरात् ॥ ९८ ॥
आश्रमाश्च तथा वर्णाः संकरा विविधा अपि।
सर्वमात्मतया भाति प्रसादात्पारमेश्वरात् ॥ ९९ ॥
निषिद्धं चानिषिद्धं च निषेधा विधयोऽपि च।
सर्वमात्मतया भाति प्रसादात्पारमेश्वरात् ॥ १०० ॥
शरीरमिन्द्रियं प्राणो मनो बुद्धिरहंकृतिः।
सर्वमात्मतया भाति प्रसादात्पारमेश्वरात् ॥ १०१ ॥
कामक्रोधादयः सर्वे तथा शान्त्यादयोऽपि च।
सर्वमात्मतया भाति प्रसादात्पारमेश्वरात् ॥ १०२ ॥
जीवात्मा परमात्मा च तयोर्भेदश्च भेदकः।
सर्वमात्मतया भाति प्रसादात्पारमेश्वरात् ॥ १०३ ॥
जडशक्तिप्रभेदाश्च चिच्छक्तिस्तद्भिदाऽपि च।
सर्वमात्मतया भाति प्रसादात्पारमेश्वरात् ॥ १०४ ॥
अस्तिशब्दोदिता अर्था नास्तिशब्दोदिता अपि।

सर्वमात्मतया भाति प्रसादात्पारमेश्वरात् ॥ १०५ ॥
आत्मा नाम सुराः स्वेन भासा यो भाति संततम् ।
तमेव त्वमहंशब्दप्रत्ययाभ्यां तु जन्तवः ॥ १०६ ॥
व्यवहारे विजानन्ति न जानन्त्येव तेऽर्थतः ।
अर्थतश्चास्य वेत्तारो न विद्यन्तेऽद्वयत्वतः ॥ १०७ ॥
एवमात्मानमद्वैतमात्मना वेद यः स्थिरम् ।
सोऽयमर्थमिमं नित्यं गायन्नास्ते स्वभावतः ॥ १०८ ॥

---

सर्वोऽपि प्रपञ्चः स्वात्ममात्रतयैव तस्य भातीत्याह--कर्तेत्यादिना॥७०--१०५॥ नन्वेवंविधं सर्वं जगद्विदुषः स्वात्मतया प्रतीयते चेदात्मनः सविशेषत्वापत्तिरित्याशङ्क्याऽऽह—आत्मा नामेति । स्वस्मिन्नारोपितप्रपञ्चस्य भासकं साधनान्तरनिरपेक्षेण स्वयमेव प्रकाशमानं यत्साक्षिचिन्मात्रं स एवाऽऽत्मा साक्ष्यं तु जगदध्यस्तत्वाच्छुक्तिरूप्यवन्मिथ्याभूतमित्यर्थः । नन्वेवमात्मा यदि स्वयंप्रकाशस्तर्हि विदुषामिवाविदुषामप्यसौ प्रकाशमान एवेत्ययत्नत एव सर्वे मुच्येरन्नित्यत आह—तमिति । स्वप्रकाशमपि तं त्वमहमिति शब्देन तदर्थविषयमनोवृत्त्या चाहंकारवैशिष्ट्येनैव जानन्ति लौकिकाः परमार्थतो निरस्तसमस्तोपाधिकमद्वितीयं चिन्मात्रस्वरूपं नैव जानन्ति ॥ १०६ ॥ अद्वयत्वत इति । अद्वितीयत्वादेवास्यात्मनः परमार्थतो वेदितारो नैव विद्यन्ते । वेदनस्य प्रमातृप्रमाणादिभेदसापेक्षत्वात् ॥ १०७ ॥ तर्हि विद्वानपि कथं तं वेदेत्यत आह—एवमिति । एवमुक्तप्रकारेण श्रवणादिसाधनजनितया निरस्तसमस्तोपाधिकब्रह्मात्मविषयमनोवृत्त्याऽऽवरणज्ञानापनयने सत्यद्वितीयमात्मानं स्वरूपप्रकाशेनैव विद्वान्साक्षात्करोति । एवं विदुषो यज्ज्ञानं प्रदर्शितं श्रुतौ " एतत्साम गायन्नास्ते " इत्यादिना "सुवर्न ज्योतीः" इत्यन्तेन तदन्वयप्रयोजनकथनेनोपपादयति—सोऽयमित्यादिना । " हा३वु हा३वु हा३वु " इत्यादि "सुवर्न ज्योतीः" इत्यन्तं साम । तस्य चायमर्थः । यदेतावन्तं कालं भोक्तृभोग्यभोगप्रदरूपं जगद्विभक्तमासीत्तत्सर्वमहमेव न मत्तोऽन्यत्किंचिदस्ति । अहो इदं महदाश्चर्यं स्वप्रकाशचिल्लक्षणपरमज्योतीरूपोऽहमेव तत्सर्वमाभिभवा-

यथा नर्तनमीशस्य स्वभावाल्लोकरक्षकम्।
तथा विद्या विनोदाख्या गीतिर्लोकोपकारिणी ॥१०९॥
यथैवाऽऽदिगुरोर्गीतिर्लोकानां हितकारिणी।
तथैवास्य गुरोर्गीतिर्लोकानां हितकाम्यया ॥ ११० ॥
आप्तकामस्य रुद्रस्य गीतिर्व्याख्यानलक्षणा।
परोपकारिणी तद्वद्गीतिरस्यापि सद्गुरोः ॥ १११ ॥
लौकिकेष्वपि गानेषु प्रसादं कुरुते शिवः।
किं पुनर्वैदिके गाने ततो गानं समाश्रयेत् ॥ ११२ ॥
व्याख्यागानेष्वशक्तस्तु शिवमुद्दिश्य भक्तितः।
लौकिकीमपि वा गीतिं कुर्यान्नित्यमतन्द्रितः ॥११३॥
गीतिज्ञानं शिवप्राप्तेः सुतरां कारणं भवेत्।
गीतिज्ञानेन योगः स्याद्योगादेव शिवैक्यता ॥११४॥
गीतिज्ञो यदि योगेन न याति परमेश्वरम्।
प्रतिबन्धकबाहुल्यात्तस्यैवानुचरो भवेत् ॥ ११५ ॥
केवलं लौकिकं गानं न कुर्यान्मोहतोऽपि वा।

---

मीति तत्साम गायन्निममर्थमनुसंदधानो विद्वान्विक्षेपहेतोरभावादव्याकुलमास्त इत्यर्थः ॥ १०८ ॥ एतद्दृष्टान्तेनोपपादयति—यथेति ॥ १०९ ॥ परमेश्वरनर्तनवद्विद्वद्विज्ञानमपि लोकरक्षाहेतुरित्युपपाद्य परतत्त्वप्रतिपत्त्युपायतामपि तस्य दृष्टान्तेनोपपादयति—यथैवेति। आदिगुरोः परमेश्वरस्य। कर्तरि षष्ठी। तत्कर्तृका गीतिः। परतत्त्वव्याख्यानरूपा या ईश्वरगीतेति कूर्मपुराणे प्रसिद्धा सा यथा परतत्त्वोपदेशेन गीतिर्लोकोपकारिण्येवमस्य विदुषो गीतिरपि परतत्त्वप्रतिपादनेन जगदनुग्रहायेत्यर्थः ॥११०॥१११॥ नन्वयमुपदेशो वाक्यान्तरादपि प्रसिद्ध इति विदुषो गानमयुक्तमित्यत आह- लौकिकेष्विति ॥११२॥ व्याख्यागानेष्विति। संस्कृतशब्दरूपं गद्यपद्यात्मकं व्याख्यागानम्। तत्तदे-

यदि कुर्यात्प्रमादेन प्रायश्चित्ती भवेद्द्विजः ॥ ११६ ॥
अतः स्वसंसारविनाशने रतः श्रुतिप्रमाणेन च
तर्कवर्त्मना । प्रबोधमासाद्य शिवस्य तं पुनः
सदैव गायन्विचरेदिमां महीम् ॥ ११७ ॥
इत्युपनिषत्परतत्त्वविषया वः सत्यमुदिता
सकलदुःखनिहन्त्री ॥ कष्टहृदयस्य मनुजस्य न
देया भक्तिसहितस्य तु शिवस्य खलु देया ॥ ११८ ॥

इति श्रीस्कान्दपुराणे सूतसंहितायां चतुर्थस्य यज्ञवैभवखण्डस्योपरिभागे ब्रह्मगीतासु साक्षिशिवस्वरूपकथनं नाम तृतीयोऽध्यायः ॥३॥

## अथ चतुर्थोऽध्यायः ।

४. तलवकारोपनिषद्व्याख्यानम् ।

ब्रह्मोवाच—

अस्ति देवः स्वतः सिद्धः साक्षी सर्वस्य सर्वदा ।
संसारार्णवमग्नानां साक्षात्संसारमोचकः ॥ १ ॥

---

शीयभाषया परमेश्वरविषया गीतिर्लौकिकी ॥ ११३—११६ ॥ श्रुतीत्युपनिषदिति ॥ ११७ ॥ यदिदं ब्रह्मविद्यानिगमनं तत्संगृह्णाति—इतीति । अनेन यथोक्तप्रकारेण परतत्त्वविषयोपनिषदुपदिष्टा । उपनिषन्नाम ब्रह्मविद्या । प्रत्यगात्मानं निरस्तसमस्तोपाधिकं ब्रह्मोपनीय भेदभ्रमहेतुभूतमविद्यातत्कार्यं निवर्तयतीति तच्छब्दव्युत्पत्तेः । उक्तं ह्याचार्यैः—"उपनीयेममात्मानं ब्रह्मापास्तद्वयं स्वतः । निहन्त्यविद्यां तज्जं च तस्मादुपनिषन्मता" इति ॥ ११८ ॥

इति श्रीसूतसंहितातात्पर्यदीपिकायां चतुर्थस्य यज्ञवैभवखण्डस्योपरिभागे ब्रह्मगीतासूपनिषत्सु साक्षिशिवस्वरूपकथनं नाम तृतीयोऽध्यायः ॥ ३ ॥

एवमैतरेयकतैत्तिरीयकस्याप्यैदंपर्यं प्रतिपादितम् । अथ सामवेदोपनि-

सर्वेषां तु मनस्तेन प्रेरितं नियमेन तु।
विषये गच्छति प्राणश्चेष्टते वाग्वदत्यपि ॥ २ ॥
चक्षुः पश्यति रूपाणि श्रोत्रं शब्दान् शृणोत्यपि।
अन्यानि खानि सर्वाणि तेनैव प्रेरितानि तु ॥ ३ ॥
स्वं स्वं विषयमुद्दिश्य प्रवर्तन्ते निरन्तरम्।
प्रवर्तकत्वं चाप्यस्य मायया न स्वभावतः ॥ ४ ॥

---

यदो ब्रह्मात्मैकत्वपरत्वं वक्तुमारभमाणस्तावज्जैमिनिसामशाखोपनिषदर्थं संगृह्णाति चतुर्थेनाध्यायेन। यथोदीरितं ब्रह्मात्मत्वमुपदेशगम्यमेव न तु तर्कगम्यमित्यमुमर्थं द्योतयितुं श्रुत्या प्रश्नप्रतिवचनाभ्यां ब्रह्मोपदिश्यते। "केनेषितं पतति प्रेषितं मनः केन प्राणः प्रथमः प्रैति युक्तः। केनेषितां वाचमिमां वदन्ति चक्षुः श्रोत्रं क उ देवो युनक्ति" इति प्रश्नः "श्रोत्रस्य श्रोत्रं मनसो मनो यद्वाचो ह वाचं स उ प्राणस्य प्राणश्चक्षुषश्चक्षुः" इति प्रतिवचनं तदेतदुभयमर्थतः संगृह्णाति—अस्ति देव इत्यादिना। स्वतः सिद्ध इति सार्वकालिकं पारमार्थिकं सत्यत्वं विवक्षितम्। साक्षीति स्वपरव्यवहारहेतुभूतचित्प्रकाशरूपत्वं साक्ष्यप्रपञ्चानन्तर्भावेन कूटस्थनित्यत्वं च ॥ १ ॥ सर्वेषामिति। तेन सर्वसाक्षिणा स्वतन्त्रेण परमेश्वरेण सर्वप्राणिहृदये जीवभावेनानुप्रविश्यावस्थितेनेच्छामात्रात्प्रेरितं प्रवर्तितं सत्स्वविषये मन्तव्ये मनः प्रवर्तते। न च देहेन्द्रियादिसंघात एव तत्प्रेरक इति वाच्यम्। तस्य प्रसिद्धत्वेनोपदेशवैयर्थ्यप्रसङ्गात्। अतस्तदतिरिक्तेन चिन्मात्रज्योतिषा केनचित्प्रेरितमेव मनः स्वविषयं प्रत्याययतीति युक्तमभ्युपगन्तुम्। प्राणापानादिपञ्चवृत्त्यात्मको मुख्यप्राणश्च तेन प्रेरित एव प्राणनादिचेष्टां करोति। तथा सर्वशब्दव्यवहारहेतुभूतं वागिन्द्रियमपि चिन्मात्रस्वरूपेणैतेन प्रेरितमेवाभिवदनरूपं स्वकार्यं करोति। चक्षुःश्रोत्रयोरप्येवं योज्यम् ॥ २ ॥ अन्यानीति। उक्तव्यतिरिक्तानि बुद्धीन्द्रियाणि कर्मेन्द्रियाणि चेत्यर्थः। नन्वसङ्गोदासीनस्य कूटस्थनित्यस्य निस्तरङ्गसमुद्रकल्पस्य चिन्मात्रस्वरूपस्याऽऽत्मनः कथमीदृग्विधं प्रेरकत्वं संभवतीत्यत आह—प्रवर्तकत्वमिति। माययेति। मलिनसत्त्वप्रधानमायापरिणामरूपदेहेन्द्रियाद्युपा-

इन्द्रियाणां तु सत्ता च नैव स्वाभाविकी मता ।
तप्तायःपिण्डवत्तस्य सत्तयैव सुरर्षभाः ॥ ५ ॥
श्रोत्रमात्मनि चाध्यस्तं स्वयं देवो महेश्वरः ।
अनुप्रविश्य श्रोत्रस्य ददाति श्रोत्रतां हरः ॥ ६ ॥
मन आत्मनि चाध्यस्तं प्रविश्य परमेश्वरः ।
मनस्त्वं तस्य सत्त्वस्थो ददाति नियमेन तु ॥ ७ ॥
वाचो वाक्त्वमनुप्राप्य प्राणस्य प्राणतां हरः ।
ददाति नियमेनैव चक्षुष्ट्वं चक्षुषस्तथा ॥ ८ ॥

---

धिसंपर्कवशेनेत्यर्थः॥ ३॥ ४॥ननु प्रेरक आत्माऽन्यस्ततोन्यत्प्रेर्यं मनआदिकामिति द्वैतापत्तिर्जायेतेत्यत आह--इन्द्रियाणामिति । मनः प्रभृतीनामिन्द्रियाणां सद्रूपे तस्मिन्नध्यस्तत्वात्तप्तायःपिण्डन्यायेनाधिष्ठानसत्त्वमेवाऽऽरोपितेषु मनःप्रभृतिषु धर्मत्वेन प्रतिभाति । नच तेषां स्वाभाविकं सत्त्वमस्तीत्यर्थः॥५॥ एवं मनआदिकं यस्येच्छामात्रात्स्वस्वव्यापारे प्रेर्यते स किंरूप इति प्रश्नोऽनुक्तोऽप्यर्थादवगन्तव्यः । अस्य चोत्तरमाह—श्रोत्रमिति । श्रोत्रं तावदितरप्रपञ्चवद्दृश्यत्वात्सर्वाधिष्ठानभूते सच्चिन्मात्र आत्मन्यध्यस्तमित्यविवादम् । तच्च श्रूयतेऽनेनेति व्युत्पत्त्या श्रवणसाधनमिन्द्रियमधिष्ठानत्वेन तदनुप्रविश्य स्वप्रकाशचिद्रूपः परशिवस्तस्य श्रोत्रत्वं श्रोत्रस्य श्रवणसाधनसामर्थ्यं प्रयच्छति । सर्वान्तरस्वप्रकाशात्मचैतन्यज्योतिःसमवधानेन हि तत्स्वविषयशब्दाभिव्यञ्जनसमर्थं भवति । अतः श्रोत्रस्यापि श्रवणसामर्थ्यप्रदानात्तथाविधं सर्वान्तरचैतन्यं श्रोत्रस्य श्रोत्रमिति श्रुत्या निर्दिश्यते । एवं मन आत्मनीत्यादावपि योज्यम् ॥ ६ ॥ सत्त्वस्थ इति । कार्येऽन्तःकरणेऽनुगतं यत्कारणभूतं सत्त्वं तस्य चैतन्यप्रकाशाभिव्यञ्जनसामर्थ्यात्तेनावच्छिन्न इत्यर्थः । मननसामर्थ्ययुक्तं हि मनस्तच्च सामर्थ्यमुदीरितरीत्या तस्य चैतन्येनाऽऽधीयत इति तन्मनसो मन इत्युपदिश्यते ॥ ७ ॥ वाचो वाक्त्वमिति । स्वात्मन्यध्यस्तं वागिन्द्रियमनुप्राप्य तस्य स्वस्य समवधानेनाभिवदनसामर्थ्यरूपं वाक्त्वं प्रयच्छतीत्यर्थः । तथा स्वात्मन्यध्यस्तस्य पञ्चवृत्तेः

अन्येषामिन्द्रियाणां तु कल्पितानामपीश्वरः ।
तत्तद्रूपमनुप्राप्य ददाति नियमेन तु ॥ ९ ॥
तत्र चक्षुश्च वाक्चैव मनश्चान्यानि खानि च ।
न गच्छन्ति स्वयञ्ज्योतिःस्वभावे परमात्मनि ॥ १० ॥
स देवो विदितादन्यस्तथैवाविदितादपि ।
वाचा च मनसा चैव चक्षुषा च तथैव च ॥ ११ ॥

---

प्राणस्यापि प्राणनादिक्रियासामर्थ्यरूपं प्राणत्वं प्रयच्छति । अत एवान्यत्राऽऽम्नायते—"ऊर्ध्वं प्राणमुन्नयत्यपानं प्रत्यगस्यति । मध्ये वामनमासीनं विश्वेदेवा उपासते" इति चक्षुष्ट्वं चक्षुषस्तथेति । यथा श्रोत्रस्य श्रोत्रत्वं तथेत्यर्थः ॥ ८ ॥ श्रोत्राद्याम्नातस्योपलक्षणार्थत्वादनाम्नातेन्द्रियसंग्रहायाऽऽह—अन्येषामिति । एवं श्रोत्रादिपरिकल्पनास्पदं कल्पितानां च तेषां श्रवणादिसामर्थ्यप्रदं सर्वान्तरं चिदेकरसं ब्रह्मेत्युपदिष्टं भवति ॥ ९ ॥ नन्वीदृशं वस्तु घटादिवद्विविक्ततया स्पष्टं कस्मान्नानुभूयत इतीमामाशङ्कां निरसितुमाम्नायते—" न तत्र चक्षुर्गच्छति न वाग्गच्छति नो मन " इति । तत्संगृह्णाति—तत्रेति । वाक्चेति । शब्दाभिव्यञ्जकमिन्द्रियं तदभिव्यङ्ग्यः शब्दश्चोभयमत्र वाक्शब्देन विवक्षितम् । तस्मादेतानि चक्षुरादीनि ब्रह्माणि माययाऽध्यस्तत्वात्तदात्मकानि । अतः स्वात्मभूते ब्रह्मणि कथं तेषां प्रवृत्तिर्विषयविषयिभावस्य भेदसापेक्षत्वात् । तदविषयत्वसमर्थनायाऽऽह—स्वयंज्योतिरिति । स्वप्रकाशचिद्रूपस्य सर्वान्तरस्य चक्षुरादिकरणं प्रति साक्षिणस्तद्विषयत्वानुपपत्तिरित्यभिप्रायः ॥ १० ॥ एवं चक्षुरादिसर्वप्रमाणाविषयं परशिवस्वरूपमागमोऽपि कथं प्रत्याययेदित्याशङ्क्य विदिताविदितव्यतिरेकावच्छिन्नं तत्प्रतिपादयितुं शक्यमित्यभिप्रेत्याऽऽम्नायते—"अन्यदेव तद्विदितादथो अविदितादधि" इति । तत्संगृह्णाति—स देव इति । "श्रोत्रस्य श्रोत्रम्" इत्यादिना निर्दिष्टश्रवणादिसामर्थ्यप्रदो यः सर्वान्तरः स्वप्रकाशः साक्षी चिद्रूप आत्मा स विदिताद्विदिक्रियाफलव्याप्ताद्विषयादन्यो विलक्षणः । तथाऽविदितादज्ञायमानादपि विलक्षणः स्वयंप्रकाशमानत्वात् । एवं विदिता-

श्रोत्रेणापि सुरश्रेष्ठाः प्राणेनान्येन केनचित् ।
न शक्यो गोचरीकर्तुं सत्यमेव मयोदितम् ॥ १२ ॥
यस्येदमखिलं नित्यं गोचरं रूपवद्रवेः ।
तदेव परमं ब्रह्म वित्त यूयं सनातनम् ॥ १३ ॥
एवं जानन्ति ये धीरास्तर्कतश्च प्रमाणतः ।
गुरूक्त्या स्वानुभूत्या च भवन्ति खलु तेऽमृताः ॥ १४ ॥
सुज्ञातमिति तद्ब्रह्म मनुध्वं यदि हे सुराः ।

---

विदिताभ्यामन्यत्वेनाऽऽगमप्रमाणात्प्रतिपत्तुं शक्यत इत्यर्थः।एवमात्मन्युपदिष्टेऽपि ततोऽन्यदेव किंचिदुपासनीयं ब्रह्मेति शिष्यशङ्कानिरासार्थमाम्नायते—'यद्वाचाऽनभ्युदितं येन वागभ्युद्यते। तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासते । यन्मनसा न मनुते येनाऽऽहुर्मनो मतम् । तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासते । यच्चक्षुषा न पश्यति येन चक्षूंषि पश्यति । तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासते । यच्छ्रोत्रेण न शृणोति येन श्रोत्रमिदं श्रुतम् । तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासते । यत्प्राणेन न प्राणिति येन प्राणः प्रणीयते । तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासते" इति। तत्संगृह्णाति — वाचा चेति। यद्वागादिभिरिन्द्रियैर्विषयीकर्तुमशक्यं विदिताविदिताभ्यामन्यत्वेन निर्दिष्टं स्वप्रकाशसाक्षिचिद्रूपं यस्य च सर्वान्तरस्याऽऽत्मनाश्चप्रकाशेन वाङ्मनसाद्यखिलं जगत्सूर्यप्रकाशेन रूपमिव प्रकाश्यते स्वव्यापारे प्रेर्यते च तदेव च सर्वान्तरं ब्रह्म वित्त जानीत नैतस्मादन्यदिदंकारास्पदमित्येवकारार्थः ॥ ११—१३ ॥

एवमिन्द्रियादिविविक्तस्य तत्साक्षिणः प्रत्यगात्मनो यद्ब्रह्मरूपत्वज्ञानमुपदिष्टं तस्य फलमाम्नायते—"अतिमुच्य धीराः प्रेत्यास्माल्लोकादमृता भवन्ति" इति । तदर्थं ब्रूते । एवमिति । धीरा धीमन्तो विद्वांसः । एवमुक्तप्रकारेण देहेन्द्रियादिकमात्मनो विविच्य ततो विविक्तमद्वितीयब्रह्मात्मतत्त्वं प्रमाणतर्काभ्यां गुरुमुखादधिगम्य मनननिदिध्यासनजनितनिर्विचिकित्ससाक्षात्कारलक्षणेन स्वानुभवेन ये जानन्ति तेऽमृतत्वलक्षणां मुक्तिं प्राप्नुवन्तीत्यर्थः ॥ १४ ॥

इत्थं स्वात्मतयोपदिष्टस्य ब्रह्मणोऽवगतिसमये शिष्यस्याहं मां ब्रह्म जानामीति

दभ्रमेव हि तत्साक्षि ब्रह्म वेद्यं कथं भवेत् ॥ १५ ॥
यस्य स्वात्मतया ब्रह्म विदितं कर्मतां विना ।
तस्य तज्ज्ञानकर्तृत्वविहीनस्य मतं हि तत् ॥ १६ ॥
यस्यामतं तस्य मतं मतं यस्य न वेद सः ।
अविज्ञातं विजानतां विज्ञातमविजानताम् ॥ १७ ॥

---

कर्मकर्तृभावलक्षणभेदावभासस्यावस्तुविषयत्वं प्रतिपादयितुं तथाविधभेदविनिर्मुक्तमखण्डैकरसं ब्रह्मात्मतत्त्वं स्वरूपप्रकाशेनैव ज्ञापयितुं च गुरुशिष्यकृतोक्तिप्रत्युक्तिरूपेण श्रुतिः प्रवदते—"यदि मन्यसे सुवेदेति दभ्रमेवापि नूनम् । त्वं वेत्थ ब्रह्मणो रूपम्" इति गुरुवाक्यम् । "नाहं मन्ये सुवेदेति नो न वेदेति वेद च" इति तत्प्रतिवचनरूपं शिष्यवाक्यम् । तदेतद्वाक्यद्वयाभिप्रेतमर्थं संगृह्य ब्रह्मा देवान्प्रत्युपदिशति—सुज्ञातमिति । हे देवा यूयं तत्स्वात्मभूतं ब्रह्म सुज्ञातं सुष्ठ्वस्माभिर्बुद्धिवृत्त्या विषयीकृतमिति यदि जानीथ तथाऽवच्छिन्नस्वभावं तद्ब्रह्म बुद्धिवृत्तिपरिच्छेदाद्दभ्रमल्पमेव भवेत् । तथा च वस्तुगोचरमेतज्ज्ञानं स्यादित्यर्थः । तथाविधबुद्धिवृत्तेः साक्षित्वेन भासकं तद्ब्रह्म कथं तत्प्रकाश्यं भवेत् । अतः स्वप्रकाशसाक्षिरूपस्य ब्रह्मणो वेद्यत्वासंभवाद्बुद्धिवृत्तिवेद्यं सोपाधिकमेव रूपं न तु निरुपाधिकमिति वेद्यस्य दभ्रत्वम् ॥ १५ ॥ यस्य खलु तद्ब्रह्म विदिक्रियाजन्यफलभागित्वमन्तरेणैव स्वात्मतया प्रत्यक्साक्षिरूपेण विदितं स्वरूपप्रकाशेनैव भातं भवति स च प्रकाशो नित्य इति तं प्रति कर्तृत्वमपि नास्ति तस्य विदुषस्तदनवच्छिन्नं निरस्तसमस्तोपाधिकं ब्रह्म ज्ञातं भवति ॥ १६ ॥ शिष्याचार्यसंवादेन निर्णीतमर्थं श्रुतिरवधारयति—"यस्यामतं तस्य मतं मतं यस्य न वेद सः । अविज्ञातं विजानतां विज्ञातमविजानताम्" इति तां संगृह्णाति—यस्येति । यस्य साधकस्य तत्स्वात्मभूतं ब्रह्मामतं मनोवृत्त्याऽविषयीकृतं केवलस्वरूपप्रकाशेनैव प्रकाशितं तस्य तद्ब्रह्म मतं ज्ञातं भवति यस्य तु तद्ब्रह्म मतं मनसा विषयीकृतं नासौ तज्जानाति । तस्मात्तद्ब्रह्म वयं जानीम इति बुद्धिवृत्तिविशिष्टरूपेण जानतामनवगतमेव भवति । बुद्धिवृत्त्यवैशिष्ट्येन जानतां तु स्वरूपप्रकाशेनैव तज्ज्ञातं

ब्रह्मज्ञाने घटज्ञाने भ्रान्तिज्ञानेऽपि चाऽऽस्तिकाः ।
नैव कर्तृ न कर्मापि ब्रह्म चित्केवलं भवेत् ॥ १८ ॥
यस्य कर्तृतया भातं ब्रह्माकर्तृ सुरोत्तमाः ।
तस्य ब्रह्मामतं यस्मात्कर्तृ तस्य मतं हि तत् ॥ १९ ॥
यस्य कर्मतया भातं ब्रह्माकर्म सुरोत्तमाः ।
तस्य ब्रह्मामतं यस्मात्कर्म तस्य मतं हि तत् ॥ २० ॥
अकर्त्रविषयप्रत्यक्प्रकाशः स्वात्मनैव तु ।
विना तर्कप्रमाणाभ्यां ब्रह्म यो वेद वेद सः ॥ २१ ॥
एवंरूपपरिज्ञानमपि दृश्यतयैव तु ।
यस्य भाति स तत्साक्षी ब्रूत ब्रह्मात्मवित्कथम् ॥ २२ ॥
ब्रह्मविद्याऽपि जाता चेद्वेद्या भवति कुम्भवत् ।
अवेद्यं ब्रह्म वेद्यं स्याद्वेद्यविद्याभिसंगमात् ॥ २३ ॥
वेत्ताऽपि विद्यासंबन्धात्सविशेषो भवेद्ध्रुवम् ।
निर्विशेषं परं ब्रह्म ततो विद्वान्न चाऽऽत्मवित् ॥ २४ ॥
विद्याया आश्रयत्वेन विषयत्वेन वा भवेत् ।
ब्रह्म नैवान्यथा तत्र ब्रह्म ब्रह्म भवेत्कथम् ॥ २५ ॥

---

भवतीत्यर्थः॥१७॥ ननु यस्य खल्वमतं कथं तस्य तन्मतं स्यात्परस्परविरुद्धत्वादित्याशङ्क्य मतशब्दस्योदीरितार्थप्रतिपादनं समर्थयितुमाम्नायते । 'प्रतिबोधविदितं मतम्' इति । बुद्धिवृत्तयो बोधाः सर्वास्वपि वृत्तिषु तद्भासकसाक्षिरूपेणावस्थितमनुगतं स्वप्रकाशचैतन्यं प्रकाशाव्यभिचारान्मतमित्युच्यत इति श्रुतेरित्यर्थमर्थतः संगृह्णाति - ब्रह्मेति । यदेतच्छ्रवणमननादिसाधनजनितनिरस्तसमस्तोपाधिकपरमार्थसद्ब्रह्मविषयं ज्ञानं यच्च व्यावहारिकसत्यघटादिविषयं चक्षुरादीन्द्रियसंप्रयोगजनितं ज्ञानं यच्च प्रातीतिकसत्यशुक्तिरूप्यादिविषयं भ्रान्तिज्ञानं तेषु सर्वेषु वृत्तिज्ञानेषु निरुपाधिकं स्वात्मभूतं चिदेकरसं ब्रह्माविक्रिय-

ब्रह्मसंबन्धहीना चेद्विद्या ब्रह्म तु वेदितुम्।
अशक्यं तत्र हे देवाः को वा ब्रह्मात्मविद्भवेत् ॥ २६ ॥
ब्रह्मण्यध्यस्तमायादिनिवृत्तिं कुरुते तु सा।
विद्या यदि न मायायाः प्रत्यगात्मन्यसंभवात् ॥ २७ ॥
प्रत्यगात्मा परं ज्योतिर्माया सा तु महत्तमा।
तथा सति कथं मायासंभवः प्रत्यगात्मनि ॥ २८ ॥

त्वात्कर्त्रपि न भवति नापि कर्म किंतु तस्य सर्वस्य साक्षित्वेन भासकं स्वप्रकाशज्ञानमेव केवलं भवेदित्यर्थः ॥ १८—२५ ॥ एतदेव ब्रह्मणः कर्तृकर्मभावराहित्यमुपपादयति—ब्रह्मसंबन्धेति। न तावदविक्रियस्यासङ्गस्य ब्रह्मणो विद्यां प्रत्याश्रयत्वं विषयत्वं वा संभवति। तथाविधधर्मत्वेनैव परिच्छेदादपरिच्छिन्नार्थप्रतिपादकब्रह्मशब्दाभिधेयत्वमेव तस्य हीयेत। अतोऽपरिच्छिन्नस्य केनाचिदपि पारमार्थिकः संबन्धो दुर्निरूप इति विद्या परमार्थतो ब्रह्मसंबन्धरहितैवेत्यङ्गीकार्यम्। सा चेदेवंविधा तथा सति तया विद्यया ब्रह्म वेदितुमशक्यम्। विदिक्रियाजन्यफलभागित्वाद्वेद्यत्वस्य स्वयमेव तथाविधफलात्मके ब्रह्मण्युदीरितक्रियाफलभागित्वासंभवादनुपयोगाच्च। न हि परमार्थतो निरस्तसमस्तोपाधिकस्य स्वयंप्रकाशमानस्यानाधेयातिशयस्य विद्यया कश्चिदुपयोगोऽस्ति येन तज्जन्यफलभागितया तद्वेद्यता स्यात्। तत्रैवमवेद्यत्वे सति को नाम ब्रह्मात्मविद्भवेत्। कर्मत्वकर्तृत्वलक्षणधर्मसंबन्धसव्यपेक्षत्वाद्ब्रह्मात्मवित्त्वस्य। अतो विद्वान्सकलोपाधिव्यतिरेकावच्छिन्नतया तत्स्वात्मभूतं ब्रह्म साक्षात्कुर्वन्वाङ्मनसातीतं स्वप्रकाशं ब्रह्मैव केवलं भवेन्न तु ब्रह्मात्मविदित्यर्थः ॥ २६ ॥ एवं स्वप्रकाशे ब्रह्मणि विद्यया प्रकाशजनकत्वासंभवेऽपि तत्स्वरूपावरणाविद्यानिवृत्तिजननद्वारा तत्संबन्धमाशङ्क्य निरस्यति—ब्रह्मणीति। प्रत्यक्त्वेन साक्षात्कृते परमार्थतो निरविद्ये ब्रह्मणि मायातत्कार्यसंस्पर्शासंभवादविद्यानिवृत्त्यर्था विद्येत्येतदपि न विचारसहमित्यर्थः ॥ २७ ॥ एतदेवोपपादयति—प्रत्यगिति। सूर्यादीनि प्रसिद्धानि ज्योतींषि तेषामपि चित्प्रकाशाभिसंबन्धबलेनैव प्रकाशकत्वमिति तथाविधस्वप्रकाशचिदात्मा परं ज्योतिः। श्रूयते हि—"येन सूर्य-

तस्मात्तर्कप्रमाणाभ्यां स्वानुभूत्या च चिद्घने ।
स्वप्रकाशैकसंसिद्धेर्नास्ति माया परात्मनि ॥ २९ ॥
व्यावहारिकदृष्ट्येयं विद्याऽविद्या न चान्यथा।
तत्त्वदृष्ट्या तु नास्त्येव तत्त्वमेवास्ति केवलम्॥ ३० ॥
व्यावहारिकदृष्टिस्तु प्रकाशाव्यभिचारतः ।
प्रकाश एव सततं तस्मादद्वैतमेव हि॥ ३१ ॥
अद्वैतमिति चोक्तिश्च प्रकाशाव्यभिचारतः ।

---

स्तपति तेजसेद्धः" "तमेव भान्तमनु भाति सर्वं तस्य भासा सर्वमिदं विभाति" इति "परं ज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यते" इति च। शार्वरतमोवदाच्छादकत्वादविद्यमानस्य नामरूपप्रपञ्चस्योपस्थापनाच्च माया नामाधिकं तम एव। सा च कथमुदीरितलक्षणं ब्रह्माऽऽश्रयेद्विषयीकुर्याद्वा। न हि प्रकाशमानं सूर्यं नैशं तम आश्रयति। विषयी करोतीत्यर्थः ॥ २८ ॥ २९ ॥

ननूक्तरीत्या ब्रह्मस्वरूपे विद्याया अकिंचित्करत्वे "ब्रह्मविदाप्नोति परम्" "ब्रह्म वेद ब्रह्मैव भवति" "अथ परा यया तदक्षरमधिगम्यते" इत्यादिश्रुतिभिर्विद्यायास्तत्स्वरूपप्राप्त्युपायप्रतिपादनं व्याहन्येतेत्याशङ्क्याऽऽह—व्यावहारिकेति। व्यवहारमात्रसिद्धं मायापरिकल्पितं प्रपञ्चमाश्रित्य हि प्रत्यक्षादिप्रमाणानि प्रवृत्तानि। अतो वेदोऽपि तदनन्तर्गतत्वाद्व्यावहारिकदृष्ट्यैव विद्याया अविद्यानिवृत्तिद्वारा तत्प्राप्त्युपायत्वं शास्ति। अतो विद्याऽविद्या चेत्येतदुभयमपि व्यवहारदृष्ट्यैव। परमार्थदृष्ट्या त्वद्वितीयं स्वप्रकाशं ब्रह्मात्मतत्त्वमेवास्ति ॥ ३० ॥

एवं परमार्थतो ब्रह्मणोऽसङ्गत्वेन विद्यासंबन्धाभावाद्ब्रह्मतदितरगोचराणां सर्वासां बुद्धिवृत्तीनां यद्भासकं साक्षिस्फुरणं तत्परिशेषात्स्वप्रकाशमद्वितीयं चेति "प्रतिबोधविदितं मतम्" इति श्रुत्यर्थं निगमयति—व्यावहारिकेति। व्यवहारदृष्टेः पुरुषस्य घटपटादिविषयमनोवृत्तिषु सर्वत्र साक्षिचित्प्रकाशस्य भासकत्वेनाव्यभिचरितत्वादनुगतस्वपरव्यवहारहेतुप्रकाशस्वरूप एव प्रत्यगात्मा। तस्मादव्यभिचारिणि चित्प्रकाशे ब्रह्मणि रज्ज्वा इदमंशे सर्पधारादिवद्व्यभिचारिदृश्यप्रपञ्चस्य परिकल्पितत्वेन मिथ्यात्वात्प्रकाशरूपं ब्रह्माद्वैतमेवेति सिद्धमित्यर्थः॥

प्रकाश एव सततं तस्मान्मौनं हि युज्यते ॥ ३२ ॥
प्रत्यक्षादिप्रमाणैश्च तर्कैः श्रुत्या तथैव च ।
स्वगुरोरुपदेशेन प्रसादेन शिवस्य तु ॥ ३३ ॥
अर्जितैरपि धर्मैश्च कालपाकेन धार्मिकाः ।
अर्थो महानयं भाति शाङ्करः पुरुषस्य तु ॥ ३४ ॥
यस्य प्रकाशितः साक्षादयमर्थो महत्तरः ।

३१ ॥ नन्वद्वैतमिति द्वैतनिषेधविशिष्टं ब्रह्म प्रतीयते। तथा च कथं निर्विशेषब्रह्मसिद्धिरित्यत आह—अद्वैतमिति। अद्वैतोक्तिरपि प्रकाशाव्यभिचारादव्यभिचारिचित्प्रकाशात्मनैकरूप्यावगमादित्यर्थः। प्रकाश एव सततमिति। प्रकाशस्वरूपादन्यस्य द्वैतनिषेधस्य द्वैतवत्स्वात्मनोऽप्यन्यत्वसाम्येन स्वेनैव निवर्तनात्तन्निषेधविनिर्मुक्तः केवलं चित्प्रकाश एवावशिष्यते । स च स्वसत्तायां प्रकाशव्यतिरेकविरहितत्वात्स्वप्रकाश इति सततशब्दार्थः । एवं निर्विशेषाचित्प्रकाशात्मनि ब्रह्मणि शब्देन मनसा च विषयीक्रियमाणे तत्तदुपाधिवैशिष्टयप्रसङ्गात्तूष्णीमवस्थानमेव विदुषः स्वरूपप्रतिपत्त्युपाय इत्युपसंहरति—तस्मादिति । श्रोत्रादीनीन्द्रियाणि समनस्कानि स्वविषयेभ्यो व्यावृत्यान्तर्मुखे विक्षेपवासनाविनिर्मुक्ते प्रसन्नान्तःकरणे तद्भासकप्रत्यक्चैतन्यस्वरूपं ब्रह्म स्वयमेव प्रकाशत इत्यभिप्रायः। एतावता यस्यामतं तस्य मतमिति श्रुत्यर्थः सम्यगुपपादितो भवति ॥ ३२ ॥ ननु मौनमात्रं चेद्ब्रह्मोपदेशः स च सर्वेषां सुलभ इति तत्सिद्ध्यर्थं न प्रयतितव्यमित्यत आह—प्रत्यक्षादीति ॥ ३३ ॥ भवपरंपरासु वर्णाश्रमधर्मरतिभिः परमेश्वरं समाराध्य समासादिततत्प्रसादस्य साधनचतुष्टयसंपन्नस्य कस्यचिदेव मुमुक्षोः पुरुषस्य महान्सूक्ष्मत्वेनातिगम्भीरोऽयमर्थो भाति नान्यस्येत्यर्थः ॥ ३४ ॥ श्रुतावमृतत्वं हि विन्दत इत्यादिना साधनान्तरनिरपेक्षस्य यथोक्तज्ञानस्य यदमृतत्वप्राप्त्युपायत्वं प्रतिपादितं तत्तात्पर्यार्थकथनेन विवृणोति—यस्येत्यादिना । अद्वयत्वत इति। स्वात्मनोऽद्वितीयब्रह्मसाक्षात्काराज्ज्ञानकर्मणोः साधनभूतवस्त्वन्तरप्रतिभासाभावादद्वितीयब्रह्मात्मनाऽवस्थितस्य विदुषस्तत्रानधिकार इत्यर्थः ॥

तस्य नास्ति क्रियाः सर्वा ज्ञानं चाप्यद्वयत्वतः ॥३५॥
अयमर्थो महान्यस्य स्वत एव प्रकाशितः ।
न स जीवो न च ब्रह्म न चान्यदपि किंचन ॥३६॥
अयमर्थो महान्यस्य स्वत एव प्रकाशितः ।
न तस्य वर्णा विद्यन्ते नाऽऽश्रमाश्च तथैव च ॥ ३७ ॥
अयमर्थो महान्यस्य स्वत एव प्रकाशितः ।
न तस्य धर्मोऽधर्मश्च न निषेधो विधिर्न च ॥ ३८ ॥
एतमर्थं महान्तं यः प्राप्तः शम्भोः प्रसादतः ।
स शंभुरेव नैवान्य इति मे निश्चिता मतिः ॥ ३९ ॥
एतमर्थं महान्तं यः प्राप्तः शंभोः प्रसादतः ।
तस्याहं वैभवं वक्तुं न शक्तः सत्यमीरितम् ॥ ४० ॥
एतमर्थं महान्तं यः प्राप्तः शंभोः प्रसादतः ।
वैभवं तस्य विष्णुश्च न शक्तो वक्तुमास्तिकाः ॥४१॥
एतमर्थं महान्तं यः प्राप्तः शंभोः प्रसादतः ।
वैभवं तस्य रुद्रश्च न शक्तो वक्तुमास्तिकाः ॥ ४२ ॥
एतमर्थं महान्तं यः प्राप्तः शंभोः प्रसादतः ।

---

३५॥ न केवलमेतावदेव भेदोपजीवनेन प्रवृत्तः सकलोऽपि व्यवहारस्तस्य न संभवतीत्याह—अयमर्थो महानित्यादिभिः पर्यायैः॥ ३६—४० ॥ श्रुतावा-त्मना विन्दते वीर्यमिति यद्विद्याप्रकाशितात्मस्वरूपेणैवाविद्यातत्कार्याभिभवसमर्थं वीर्यं विद्वाल्लँभत इति प्रतिपादितं तद्दर्शयति–वैभवं तस्येति । वैभवं महत्त्वम् । निर्वीर्यस्य महत्त्वासंभवात्तेन महत्त्वेन स्वकारणभूतं निरतिशयं वीर्यं लक्ष्यते । धनसहायमन्त्रौषधादिसाधनजनितं वीर्यं ह्यनित्यवस्तुजनितत्वादमृतत्वव्यतिरि-क्तस्यैव फलस्य साधनमिति तत्परिच्छेत्तुं शक्यम् । आत्मविद्याजनितं वीर्यं

वैभवं तस्य वेदाश्च न शक्ता वक्तुमास्तिकाः ॥ ४३ ॥
अस्मिन्देहे यदि ज्ञातः पुरोक्तोऽर्थो महानयम् ।
स साक्षात्सत्यमद्वैतं निर्वाणं याति मानवः ॥ ४४ ॥
अस्मिन्देहे न विज्ञातः पुरोक्तोऽर्थो महान्यदि ।
विनष्टिरेव महती तस्य नैव परा गतिः ॥ ४५ ॥
स्वशरीरेऽन्यदेहेषु समं निश्चित्य तं दृढम् ।
अथ धीरा न जायन्ते ह्यमृताश्च भवन्ति हि ॥ ४६ ॥

---

त्वतथाविधमितीश्वरोऽपि न तद्वक्तुं शक्नोतीत्यर्थः ॥ ४१—४३ ॥ एषा चामृतत्वसाधनभूता विद्या सुकृतवशाल्लब्धेति विविदिषुभिः शरीरे विद्यमान एव यत्नतः संपादनीया । तस्मिन्सत्यपि तदसंपादने पुरुषस्याऽऽत्यन्तिकसंसार एवेति श्रुतिरधिकारिणं प्रत्युपदिशति—"इह चेदवेदीदथ सत्यमस्ति न चेदिहावेदीन्महती विनष्टिः" इति । अस्याः श्रुतेरर्थं ब्रूते—अस्मिन्निति । अस्मिन्विद्याधिकारिणि मनुष्यादिदेहे सत्येव पूर्वोक्तप्रत्यग्ब्रह्मरूपोऽर्थो यदि ज्ञातः स्यात्तदा स विद्वान्परमार्थसत्यं निरस्तसमस्तोपाधिकमद्वितीयब्रह्मलक्षणं मुक्तिस्वरूपं प्राप्नोति ॥ ४४ ॥ उक्तमर्थं व्यतिरेकमुखेनोपपादयति—अस्मिन्निति । यद्यस्मिन्विद्याधिकारिणि देहे सत्यप्यालस्योपहतत्वेन श्रवणमननादिसाधनानुष्ठानाद्विद्योदयाभावेन प्रागुक्तार्थो न ज्ञातः स्यात्तदा सत्यं तस्य निरतिशयानन्दावाप्तिलक्षणपरमपुरुषार्थहानिर्भवति । तथा च तस्याविदुषः संसारप्रवाहपात एवेति नैव कदाचिदपि मुक्तिः सिध्येदित्यर्थः ॥ ४५ ॥ एवमन्वयव्यतिरेकाभ्यां विविदिषुशरीरे विद्यायाः सौलभ्यमभिधाय तत्फलमाम्नायते—"भूतेषु भूतेषु विविच्य धीराः प्रेत्यास्माल्लोकादमृता भवन्ति" इति । तद्व्याचष्टे—स्वशरीर इति । ये नाम प्राज्ञाः स्वकीयशरीरे देहान्तरेषु सोपाधिषु घटशरावादिषु चन्द्रस्वरूपवत्साम्येनावस्थितमुदीरितलक्षणं ब्रह्मात्मतत्त्वं श्रवणमननादिभिः साक्षात्कृत्य धीरा धैर्यवन्तो दृढनिश्चयाः संसारभयरहिता वर्तन्ते । ते पुनरेतद्देहपातानन्तरं न जायन्ते । विद्यया सकलसंसारनिदानभूताविद्यायाः समूलं निवर्तितत्वात् । अपि तु कदाचिदप्यनश्वरब्रह्मात्म-

बद्धो मुक्तो महाविद्वानज्ञ इत्यादिभेदतः ।
एक एव सदा भाति नानेव स्वप्नवत्स्वयम् ॥ ४७ ॥
अतः स्वमुक्त्यैवान्येषामाभासानामपि ध्रुवम् ।
मुक्तिं जानाति हे देवा आत्मनामात्मविद्वरः ॥ ४८ ॥
स्वसंसारदशायां तु स्वभ्रान्त्या सर्वदेहिनाम् ।
आभासानां च संसारं वेद मुक्तिं तथैव च ॥ ४९ ॥
प्रारब्धकर्मपर्यन्तं कदाचित्परमात्मवित् ।
जगज्जीवादिकं वेद कदाचिन्नैव वेद तत् ॥ ५० ॥

---

का एव भवन्ति ॥ ४६ ॥ नन्वेकस्यैवाऽऽत्मनः स्वेतरसर्वशरीरेषु कथं साम्येनावस्थानं बद्धमुक्तादिव्यवस्थान्यथानुपपत्त्या तन्नानात्वस्यावश्यंभावादित्याशङ्क्याऽऽह—बद्ध इति । यथा स्वप्नावस्थायां तैजस आत्मैव महीधरादिलक्षणस्वाप्नपदार्थरूपेण नानेवावभासते तथैक एव चिदात्मा स्वाविद्यापरिकल्पितोपाधिनानात्ववशेन बद्धो मुक्तो विद्वानज्ञ इत्येवमाद्यौपाधिकविरुद्धधर्मसंसर्गितया नानेव भवति ॥ ४७ ॥ नन्वेवमात्मन एकस्मिंश्चिदुपाधौ केनचिद्विद्ययाऽऽत्मनि साक्षात्कृते सत्यविद्यानिवृत्त्या तस्यैकस्याऽऽत्मनो मुक्तत्वेन पुनरविद्यासंबन्धानुपपत्तेर्जीवप्रपञ्चस्य सर्वस्य मुक्तिरयत्नतः सिद्धेत्याशङ्क्याऽऽह—अत इति । यत एक एवाऽऽत्माऽतः श्रवणमननादिसाधनकलापमनुष्ठितवतो विदुषः स्वस्य मुक्त्यैव स्वव्यतिरिक्तानामपि तत्तदन्तःकरणोपाधिप्रतिबिम्बरूपेण दर्पणप्रतिबिम्बितमुखाभासवदाभासतया प्रतीयमानानामात्मनां तत्त्वतः स्वस्मादव्यतिरिक्तत्वात्स्वमुक्तिसमये तेषामपि मुक्तिमसौ विद्वाञ्जानात्येव । तथाऽपि तु स्वसंसारावस्थायां स्वभ्रान्त्या स्वाविद्यया स्वस्यान्येषां शरीरिणां च संसारमपि जानाति भ्रान्तिनिवृत्तौ मुक्तिं च यथैवं तथाऽन्येऽप्याभासरूपा आत्मानः स्वसंसारदशायां स्वस्याऽविद्यया परिकल्पितसंसारं विद्योदयपर्यन्तं जानन्त्येवेति विद्वद्दृष्ट्या मुक्तत्वेऽप्यविदुषां न संसारित्वनिवृत्तिरित्यर्थः ॥४८॥४९॥ नन्वेवमविदुषां स्वाविद्यावशादस्तु जगत्प्रतिभासः विदुष-

कदाचिद्ब्रह्म जानाति प्रतीतमखिलं सुराः ।
कदाचिन्नैव जानाति स्वभावादेव तत्त्ववित् ॥ ५१ ॥
जगज्जीवादिरूपेण यदा ब्रह्म विभासते ।
तदा दुःखादिभोगोऽपि भाति चाऽऽभासरूपतः ॥५२॥
यदा ब्रह्मात्मना सर्वं विभाति स्वत एव तु ।
तदा दुःखादिभोगोऽयमाभासो न विभासते ॥ ५३ ॥
जगज्जीवादिरूपेण पश्यन्नपि परात्मवित् ।
न तत्पश्यति तद्रूपं ब्रह्मवस्त्वेव पश्यति ॥ ५४ ॥

---

स्त्वविद्यानिवृत्त्या तत्कार्यस्य जगतः प्रतिभासोऽनुपपन्न इत्यत आह—प्रारब्धेति । कर्माणि द्विविधानि । आरब्धफलान्यनारब्धफलानि च । तत्राना-रब्धफलवदारब्धफलानां ज्ञाननिवर्त्यत्वाभावेन भोगेनैव क्षपयितव्यत्वात्ताव-त्पर्यन्तं कदाचित्फलभोगसमये तत्साधनभूतं भोक्तृभोग्यात्मकं जगद्विद्वानपि जानाति । कदाचिदद्वितीयब्रह्मात्मानुभवसमये तु नैव तज्जगज्जानातीत्यर्थः ॥ ५० ॥ नन्वविदुष इव विदुषोऽपि जगत्प्रतीतिरस्ति चेत्तस्य को विशेष इत्यत आह—कदाचिद्ब्रह्मेति । यत्सर्वस्य प्रत्यग्भूते ब्रह्मण्यध्यस्ततया प्रतीयमानमखिलं जगदस्ति तत्सर्वं ब्रह्म जानाति । आरोपितस्याधिष्ठानादव्यति-रिक्तत्वादधिष्ठानब्रह्मात्मनैव कदाचित्प्रतीतिसमये विद्वाञ्जानातीत्यर्थः । कदा-चित्समाध्यवस्थायां त्वधिष्ठानब्रह्मयाथात्म्यज्ञानेनाऽऽरोपितस्य विलापनात्स्वा-त्मनो निष्प्रपञ्चस्वाभाव्यादेव जगन्नैव जानाति । अतो विदुषोऽध्यस्तत्वेनैव कादा-चित्को जगद्भासः । अविदुष इव न परमार्थत्वेन सार्वकालिक इत्यर्थः ॥ ५१ ॥ जगज्जीवादीति । यदा चैवं विदुषो विक्षेपसमये ब्रह्म बाध्यभोक्तृभोग्यप्रपञ्चा-त्मना भासते तदा विदुषस्तत्कृतसुखाद्युपभोगोऽपि साधनवदाभासरूपतयैव भाति ॥ ५२ ॥ यदा तु समाधिसमये प्रतीतं सर्वं जगत्स्वकीयबाधावधिभू-तब्रह्मात्मना ब्रह्मावशेषेण विभाति तदा दुःखसाधनस्य जगतोऽप्रतिभासात्त-द्धेतुकः संसारदुःखादिरपि नैव तस्य प्रतीयत इत्यर्थः ॥ ५३ ॥ नन्वविद्वा-

ब्रह्मणोऽन्यत्सदा नास्ति वस्तुतोऽवस्तुतोऽपि च ।
तथा सति शिवादन्यत्कथं पश्यति तत्त्ववित् ॥ ५५ ॥
ब्रह्मरूपेण वा साक्षाज्जगज्जीवात्मनाऽथवा ।
यथा यथा प्रथा साक्षाद्ब्रह्म भाति तथा तथा ॥ ५६ ॥
यथा यथाऽवभासोऽयं स्वभावादेव भासते ।
तथा तथाऽनुसंधानं योगिनः स्वात्मवेदनम् ॥ ५७ ॥
नामतश्चार्थतश्चापि महादेवो यदि प्रभुः ।
किं जहाति तदा विद्वान्किं गृह्णाति सुरर्षभाः ॥५८॥
ग्राह्यं वा शंकरादन्यत्त्याज्यं वा यदि विद्यते ।
महत्त्वं तस्य हीयेत स्वभावो न विहन्यते ॥ ५९ ॥

---

निव विद्वानपि सकलं जगदन्यूनानुभूतं पश्यति कुतस्तं प्रति जगत आभासरूपतेत्यत आह—जगदिति । आरोपितं जगत्पश्यन्नप्यधिष्ठानसच्चिद्रूपपरमार्थब्रह्मात्मनैव पश्यति न तु नामरूपात्मनेत्यर्थः ॥ ५४ ॥ एतदेव ब्रह्मव्यतिरिक्तस्यादर्शनं विदुष उपपादयति—ब्रह्मण इति । वस्तुतस्तावद्ब्रह्मव्यतिरिक्तं नास्ति "नेह नानाऽस्तिकिंचन" इति श्रुतेः । अवस्तुतोऽपि नैवाऽस्ति । अवस्तुभूतस्य सर्वस्य जगतस्तत्स्वरूपेऽध्यस्तत्वेन तदनन्यत्वनियमात् । एवं च विद्वान्परशिवव्यतिरिक्तं कथं जानीयादित्यर्थः ॥ ५५ ॥ अतो विदुषः सर्वदा ब्रह्मभानमेवेति निगमयति-ब्रह्मरूपेणेति। अधिष्ठानब्रह्मरूपेण वाऽऽरोपितभोग्यभोक्तप्रपञ्चात्मना वा यथा यथा विदुषः प्रथा प्रतिभानं ज्ञानं भवति तथा तथा साक्षाद्ब्रह्मैव तस्य भातीति संबन्धः ॥ ५६ ॥ उक्तरीत्या सर्वजगदवभासोऽपि विदुषः समाध्यवस्थानतो न विशिष्यत इत्युपसंहरति—यथेति ॥ ५७ ॥ महादेवशब्दार्थपर्यालोचनयाऽपि न विदुषः स्वस्मादन्यत्किंचिद्धेयमुपादेयं वा संभवतीत्याह—नामत इति ॥ ५८ ॥ महत्त्वं तस्येति । त्रिविधपरिच्छेदराहित्यं हि तस्य महत्त्वम् । तच्च तस्मात्सर्वप्रत्यग्भूतात्परशिवादन्यस्मिन्हेयोपादेयवस्तुनि स्वीक्रियमाणे विहन्येतेत्यर्थः । इष्टापत्तिशङ्कां निवारयति—स्व-

महत्त्वं नैव धर्मोऽस्य भेदाभावात्परात्मनः ।
धर्मधर्मित्ववार्ता च भेदे सति हि विद्यते ॥ ६० ॥
भेदोऽभेदस्तथा भेदाभेदः साक्षात्परात्मना ।
नास्ति स्वात्मातिरेकेण स्वयमेवास्ति सर्वदा ॥ ६१ ॥
ब्रह्मैव विद्यते साक्षाद्वस्तुतोऽवस्तुतोऽपि च ।
तथा सति शिवज्ञानी किं गृह्णाति जहाति किम् ॥ ६२ ॥
मायया विद्यते सर्वमिति केचन मोहिताः ।
शिवरूपातिरेकेण नास्ति माया च वस्तुतः ॥ ६३ ॥
मायया वा शिवादन्यद्विद्यते चेच्छिवस्य तु ।

---

भाव इति । तद्धि महत्त्वं परमेश्वरस्य स्वरूपम् । न च तद्विहन्तुं युज्यते तस्यैवाभावप्रसङ्गादित्यर्थः ॥ ५९ ॥ ननु महत्त्वं परमेश्वरस्य न स्वभावोऽपि तु तस्य धर्म इति नोक्तदोषापत्तिरित्याशङ्क्याऽऽह— महत्त्वं नैवेति । भेदाभावादिति । परमात्मन एकमेवाद्वितीयमिति स्वगतसजातीयविजातीयभेदनिरासस्य श्रुत्या प्रतिपादितत्वात् । प्रत्यक्षादिप्रमाणानां च भेदग्रहणासामर्थ्यस्य दशमेऽध्याये प्रागुपपादितत्वाच्चेत्यर्थः । धर्मधर्मित्वेति । न हि स्वयमेव स्वस्य धर्मो भवतीति धर्मधर्मिभावो नियमेन भेदसापेक्षित इति व्यापकभेदाभावात्तद्व्याप्यधर्मधर्मिभावोऽपि न संभवतीत्यर्थः॥ ६० ॥ ननु कुतश्चिदप्यात्मनो भेदो नास्ति चेद्दृश्यप्रपञ्चतादात्म्यलक्षणोऽभेदः प्राप्नोतीति सविशेषत्वं ब्रह्मण इत्याशङ्क्याऽऽह—भेद इति । भेदवदभेदादेरप्याध्यासिकत्वादात्मस्वरूपव्यतिरेकेण सद्भावो नास्तीत्यर्थः ॥ ६१ ॥ हेयोपादेयविभागप्रतिपादकाभासराहित्यं विदुषो निगमयति—ब्रह्मैवेति । अध्यस्तप्रपञ्चस्य सदसद्विलक्षणत्वेन वस्तुतोऽवस्तुतश्चाधिष्ठानाद्ब्रह्मणः पृथगभावादद्वितीयं ब्रह्मैव सर्वतः प्रतिभातीति ज्ञानी किं जह्यात्किं वोपाददीतेत्यर्थः ॥ ६२ ॥ नास्ति मायेति । प्रपञ्चकारणत्वेन परिकल्प्यमानमायाया अपि सदसद्विलक्षणत्वान्मायामयं जगदस्तीति विरुद्धाभिधानमित्यर्थः ॥ ६३ ॥ माययेति । यदि

महत्वं परमं साक्षाद्धीयते सुरपुङ्गवाः ॥ ६४ ॥
महत्त्वस्य तु संकोचो नास्ति सम्यङ्निरूपणे ।
अस्ति चेदप्रमाणं स्याच्छ्रुतिः सत्यार्थवादिनी ॥ ६५ ॥
तस्मादस्ति महादेव एव साक्षात्स्वयं प्रभुः ।
आनन्दरूपः संपूर्णो न ततोऽन्यत्तु किंचन ॥ ६६ ॥
इयमेव तु तर्काणां निष्ठाकाष्ठा सुरोत्तमाः ।
प्रत्यक्षादिप्रमाणानां वेदान्तानामपीश्वराः ॥ ६७ ॥
स्मृतीनां च पुराणानां भारतस्य तथैव च ।
वेदानुसारिविद्यानामन्यासामास्तिकोत्तमाः ॥ ६८ ॥
शैवागमानां सर्वेषां विष्णुप्रोक्तागमस्य च ।
अस्मदुक्तागमस्यापि सुराः सूक्ष्मनिरूपणे ॥ ६९ ॥
बुद्धागमानां सर्वेषां तथैवार्हागमस्य च ।
यक्षगन्धर्वसिद्धादिनिर्मितस्याऽऽगमस्य च ॥ ७० ॥
परमाद्वैतविज्ञानं कस्य मर्त्यस्य सिध्यति ।
कस्य वेदस्य वा साक्षाच्छिवस्यैव हि सिध्यति ॥ ७१ ॥
परमाद्वैतविज्ञानं शिवस्यामिततेजसः ।
स्वभावसिद्धं देव्याश्च शिवाया आस्तिकोत्तमाः ॥ ७२ ॥
प्रसादादेव रुद्रस्य शिवायाश्च तथैव च ।

---

मायायाः सत्यत्वमङ्गीकृत्य तन्मयं जगदस्तीति स्वीक्रियते तर्हि पूर्वोक्तं परशिवस्य त्रिविधपरिच्छेदराहित्यलक्षणं महत्त्वं भज्येतेत्यर्थः ॥ ६४ ॥ अस्ति चेदिति । आकाशादीनामिव परशिवस्य महत्त्वमापेक्षिकं चेत्तर्हि "अनन्तं ब्रह्म" "एकमेवाद्वितीयम्" इति त्रिविधपरिच्छेदराहित्यप्रतिपादिका

परमाद्वैताविज्ञानं विष्णोः साक्षान्ममापि च ॥ ७३ ॥
विराट्संज्ञस्य देवस्य स्वराट्संज्ञस्य चाऽऽत्मनः ।
सम्राट्संज्ञस्य चान्येषां प्रसादादेव वेदनम् ॥ ७४ ॥
युष्माकमपि सर्वेषां शिवस्य परमात्मनः ।
परमाद्वैतविज्ञानं प्रसादादेव नान्यथा ॥ ७५ ॥
यक्षराक्षसगन्धर्वसिद्धादीनामपीश्वराः ।
परमाद्वैताविज्ञानं प्रसादादेव शूलिनः ॥ ७६ ॥
मनुष्याणां च सर्वेषां पश्वादीनां तथैव च ।
परमाद्वैतविज्ञानं प्रसादादेव शूलिनः ॥ ७७ ॥
प्रसादे सति कीटो वा पतंगो वा नरोऽथवा ।
देवो वा दानवो वाऽपि लभते ज्ञानमुत्तमम् ॥ ७८ ॥
एष एव हि जन्तूनां परज्ञानं ददाति च ।
न विष्णुर्नाहमन्यश्च सत्यमेव मयोदितम् ॥ ७९ ॥
आदाने च तथा दाने न स्वतन्त्रो महान् हरिः ।
तथैवाहं सुरश्रेष्ठाः सत्यमेव मयोदितम् ॥ ८० ॥
स्वतन्त्रः शिव एवायं स हि संसारमोचकः ।
तं विना न मयोद्धर्तुं शक्यते संसृतेर्जनः ॥ ८१ ॥
विष्णुना च परेणापि महादेवं घृणानिधिम् ।
विना जन्तुं समुद्धर्तुं शक्यते न हि सत्तमाः ॥ ८२ ॥

---

श्रुतिरप्रमाणं स्यादित्यर्थः ॥ ६५ ॥ प्रतिपादितमर्थं निगमयति—तस्मादिति ॥ ६६—७२ ॥ "ब्रह्म ह देवेभ्यो विजिग्ये" इत्यादिकायाः श्रुतेरर्थं वक्तुमारभमाणस्तदुपोद्घातत्वेन तत्त्वज्ञानस्योमामहेश्वरप्रसादलभ्यत्वं

दर्वीन्यायेन संसारादुद्धरामि जनानिमान् ।
न स्वातन्त्र्येण हे देवाः साक्षाद्विष्णुस्तथैव च ॥ ८३ ॥
देवदेवस्य रुद्रस्य स्वरूपं तस्य वैभवम् ।
को वा जानाति नास्त्येव स्वयं जानाति वा नवा ॥८४॥
दुर्विज्ञेयो महादेवो महतामपि देहिनाम् ।
प्रसादेन विना देवाः सत्यमेव मयोदितम् ॥ ८५ ॥
पुरा सुराणां सर्वेषामसुराणां दुरात्मनाम् ।
महामोहेन संग्रामः संजातो दुर्निवारकः ॥ ८६ ॥
असुरैः पीडिता देवा बलवद्भिः सुरा भृशम् ।
तान् दृष्ट्वा भगवानीशः सर्वज्ञः करुणाकरः ॥ ८७ ॥
देवानां विजयं देवा असुराणां पराजयम् ।
ददौ तेन सुरैः शीघ्रमसुरास्तु पराजिताः ॥ ८८ ॥
अविज्ञाय महादेववैभवं परिमोहिताः ।
वयं विजयमापन्ना असुराश्च पराजिताः ॥ ८९ ॥
इत्यहंमानसंछन्नाः सर्वे देवाः पुरातनाः ।
अतीव प्रीतिमापन्ना अभवन् सुरपुङ्गवाः ॥ ९० ॥
पुनर्विश्वाधिको रुद्रो भगवान् करुणानिधिः ।

---

दर्शयति—प्रसादादेवेत्यादिना ॥ ७३—८५ ॥ उदीरितलक्षणस्य परतत्त्वस्यात्यन्तनिर्विशेषत्वेन दुर्ज्ञानत्वान्महतामिन्द्रादिदेवानामप्युपदेशगम्यत्वमीश्वरप्रसादलभ्यत्वं च दर्शयितुमाख्यायिकारूपा श्रुतिराम्नायते—“ब्रह्म ह देवेभ्यो विजिग्ये” इत्यादिका । अस्याः श्रुतेरभिप्रायं विवृणोति—पुरा सुराणामित्यादिना ॥ ८६—८८ ॥ “तस्य ह ब्रह्मणो विजये देवा अमहीयन्त त ऐक्षन्तास्माकमेव विजयोऽस्माकमेवायं महिमेति” इति श्रुतिवाक्यस्याभिप्रेतमर्थं दर्शयति—अविज्ञायेत्यादिना ॥ ८९ ॥ ९० ॥ “तद्धैषां विजज्ञौ तेभ्यो ह

स्वस्य दर्शयितुं तेषां दुर्ज्ञेयत्वं तथैव च ॥ ९१ ॥
तेषां भ्रान्तिनिवृत्त्यर्थमपि साक्षान्महेश्वरः।
आविर्बभूव सर्वज्ञो यक्षरूपेण हे सुराः ॥ ९२ ॥
तं दृष्ट्वा यक्षमत्यन्तं विस्मयेन सहामराः।
विचार्य सर्वे संभूय किमिदं यक्षमित्यपि ॥ ९३ ॥
पुनरग्निं समाहूय देवाः सर्वे विमोहिताः।
अब्रुवंस्त्वं विजानीहि किमेतद्यक्षमित्यपि ॥ ९४ ॥
अग्निस्तथा करोमीति प्रोच्य यक्षं गतोऽभवत्।
यक्षरूपो महादेवः कोऽसीत्याहानलं प्रति ॥ ९५ ॥
अग्निर्वा अहमस्मीति यक्षं प्रत्याह सोऽपि च।
सोऽपि प्रोवाच भगवांस्त्वयि किं वीर्यमित्यपि ॥९६॥
इदं सर्वं दहेयं यदिदं भूम्यां व्यवस्थितम्।
इत्याहाग्निस्तृणं तस्मै निधाय परमेश्वरः ॥ ९७ ॥
एतद्देहेति भगवान् स्मयमानोऽभ्यभाषत।
अग्निः सर्वजवेनैव तद्दग्धुं तृणमास्तिकाः ॥ ९८ ॥
अशक्तो लज्जया युक्तो भीतोऽगच्छत्सुरान् प्रति।
मया तस्यैव विज्ञातुं न शक्यं वैभवं सुराः ॥ ९९ ॥
वित्त यूयं महायासादित्याहाग्निः सुरान् प्रति।

---

प्रादुर्बभूव" इति श्रुतिवाक्यस्यार्थं ब्रूते—पुनर्विश्वाधिक इत्यादिना। स्वस्य दर्शयितुमिति। स्वस्याऽऽत्मनो दुरवगमत्वं तेषामिन्द्रादीनां दर्शयितुमित्यर्थः ॥ ९१॥९२॥ "तन्न व्यजानन्त किमिदं यक्षमिति" इति श्रुतिवाक्यस्यार्थं ब्रूते—तं दृष्ट्वेति॥९६॥"तेऽग्निमब्रुवन्" इत्यादिश्रुतिभागस्यार्थमाह-पुनरग्निमित्यादिना। ९७॥९९॥ "अथ वायुमब्रुवन्" इत्यादिश्रुतिवाक्यस्यार्थं संगृह्णाति—तच्छ्रुत्वा

तच्छ्रुत्वा वायुमाहूय विजानीहीति चाब्रुवन् ॥१००॥
सोऽपि गत्वा तथा तेन यक्षरूपेण शंभुना ।
भृशं प्रतिहतो भूत्वा तथाऽगच्छत्सुरान् प्रति ॥१०१॥
पुनरिन्द्रः स्वयं मोहादहंताकंचुकावृतः ।
विज्ञातुं यक्षमगमत्स तत्रैव तिरोदधे ॥ १०२ ॥
इन्द्रोऽतीव विषण्णस्तु महातापसमन्वितः ।
विद्यारूपामुमां देवीं ध्यात्वा कारुणिकोत्तमाम् ॥१०३॥
लौकिकैर्वैदिकैः स्तोत्रैस्तुष्टाव परमेश्वरीम् ।
सा शिवा करुणामूर्तिर्जगन्माता त्रयीमयी ॥ १०४ ॥
शिवाभिन्ना परानन्दा शंकरस्यापि शंकरी ।
स्वेच्छया हिमवत्पुत्री स्वभक्तजनवत्सला ॥ १०५ ॥
महादेवस्य महात्म्यं दुर्ज्ञेयं सर्वजन्तुभिः ।
इति दर्शयितुं देवी तत्रैवाऽऽविरभूत्स्वयम् ॥ १०६ ॥
तामाराध्य शिवामिन्द्रः शोभमानां तु सर्वतः ।
उमां पर्वतराजेन्द्रकन्यकामाह वज्रभृत् ॥ १०७ ॥

---

वायुमाहूयेत्यादिना ॥ १०० ॥ तथोति । यथा "अग्निर्वा अहमस्मीत्यब्रवीज्जातवेदा वा अहमस्मि" इत्यहंकारग्रस्तत्वेनाग्निर्ब्रह्मणाऽभिभूत एवं वायुरपि "वायुर्वा अहमस्मीत्यब्रवीन्मातरिश्वा वा अहमस्मि" इत्येवमहंकारयुक्तं वाक्यं ब्रुवन्भृशं प्रतिहतोऽभवदित्यर्थः ॥ १०१ ॥ "अथेन्द्रमब्रुवन्मघवन्नेतद्विजानीहि किमेतद्यक्षमिति तथेति तदभ्यद्रवत्तस्मात्तिरोदधे" इति श्रुतिवाक्यस्यार्थमाह—पुनरिन्द्र इति ॥ १०२ ॥ १०३ ॥ एवं भग्नाहङ्काराणां तद्ब्रह्मस्वरूपोपदेशाय परशक्तेः संनिधानमाम्नायते—"स तस्मिन्नाकाशे स्त्रियमाजगाम बहुशोभमानामुमां हैमवतीं तां होवाच किमेतद्यक्षमिति" "ब्रह्मेति होवाच"

किमेतद्यक्षमत्रैव प्रादुर्भूतं तिरोहितम् ।
वक्तुमर्हसि देवेशि मम कारुणिकोत्तमे ॥ १०८ ॥
देवी परमकारुण्याद्ब्रह्म मे पतिरत्र तु ।
प्रादुर्भूतं तिरोभूतमित्याहाशेषनायिका ॥ १०९ ॥
दुर्विज्ञेयो महादेवो विष्णोः साक्षादजस्य च ।
अन्येषामपि देवानां तवापि मघवन् भृशम् ॥ ११० ॥
प्रदर्शयितुमीशानो दुर्ज्ञेयत्वं स्वकं परम् ।
आविर्भूतो न चान्येन कारणेन सुराधिप ॥ १११ ॥
स एव सर्वदेवानां तवापि विजयप्रदः ।
पराजयकरोऽन्येषां तमेव शरणं व्रज ॥ ११२ ॥
इत्युक्त्वा सा महादेवी चिद्रूपा सर्वसाक्षिणी ।
भक्तानां पाशहन्त्री तु तत्रैवान्तर्हिताऽभवत् ॥ ११३ ॥
पुनर्देवा महादेवं महाकारुणिकोत्तमम् ।
दुर्विज्ञेयं सुरश्रेष्ठाः स्वतन्त्रं भुक्तिमुक्तिदम् ।
विदुः सुनिश्चितं त्यक्त्वा मात्सर्यं भवकारणम् ॥ ११४ ॥
प्रसादे सति विज्ञातुं शक्यते परमेश्वरः ।
प्रसादेन विना नैव शक्यते सर्वजन्तुभिः ॥ ११५ ॥
प्रसादेन विना विष्णुर्न जानाति महेश्वरम् ।

---

इत्येतद्वाक्यार्थमाह—लौकिकैरित्यादिना॥ १०४-१११॥ "ब्रह्मणो वा एतद्विजये महीयध्वम्" इति वाक्यस्य तात्पर्यार्थमाचष्टे--स एवेति॥११२॥११३॥ प्रसादे सतीति । उक्तरीत्या इन्द्रादीनामपि तत्त्वज्ञानस्य परमेश्वरप्रसादलभ्यत्वादन्येषामपीश्वरप्रसादे सत्येव परशिवस्वरूपं ज्ञातुं शक्यते नान्यथे-

तथा चाहं न जानामि देवताः सकला अपि ॥ ११६ ॥
प्रसादस्य तु सिद्ध्यर्थं खलु सर्वं सुरर्षभाः ।
प्रसादेन विना देवं ये जानन्ति सुरर्षभाः ।
ते जानन्ति विना घ्राणं गन्धं हस्तेन केवलम् ॥११७॥
प्रसादो नाम रुद्रस्य कर्मसाम्ये तु देहिनाम् ॥ ११८ ॥
देशिकालोकनाज्जातो विशिष्टातिशयः सुराः ।
प्रसादस्य स्वरूपं तु मया नारायणेन च ॥ ११९ ॥
रुद्रेणापि सुरा वक्तुं न शक्यं कल्पकोटिभिः ।
केवलं लिङ्गगम्यं तु न प्रत्यक्षं शिवस्य च ॥ १२० ॥
शिवायाश्च हरेः साक्षान्मम चान्यस्य चाऽऽस्तिकाः ।
प्रहर्षः स्वरनेत्राङ्गविक्रिया कम्पनं तथा ॥ १२१ ॥
स्तोभः शरीरपातश्च भ्रमणं चोद्गतिस्तथा ।
आकाशेऽवस्थितिर्देवाः शरीरान्तरसंस्थितिः ॥ १२२ ॥
अदर्शनं च देहस्य प्रकाशत्वेन भासनम् ।
अनधीतस्य शास्त्रस्य स्वत एव प्रकाशनम् ॥१२३ ॥
निग्रहानुग्रहे शक्तिः पर्वतादेश्च भेदनम् ।
एवमादीनि लिङ्गानि प्रसादस्य सुरर्षभाः ॥ १२४ ॥
तीव्रात्तीव्रतरः शंभोः प्रसादो न समो भवेत् ।
एवंरूपः प्रसादश्च शिवया च शिवेन च ॥ १२५ ॥
ज्ञायते न मया नान्यैर्नैव नारायणेन च ।

---

त्यर्थः ॥ ११४-११७ ॥ प्रसादस्य स्वरूपमाह—प्रसादो नामेति । कर्मसाम्य इति । सुखदुःखहेतुभूतयोर्धर्माधर्मलक्षणयोः कर्मणोरुपभोगेन प्रक्षीणत्वसाम्ये

अतः सर्वं परित्यज्य शिवादन्यत्तु दैवतम् ॥ १२६ ॥
तमेव शरणं गच्छेत्सद्यो मुक्तिं यदीच्छति ।
विष्णुभक्त्या च मद्भक्त्या नास्ति नास्ति परा गतिः॥
शम्भुभक्त्यैव सर्वेषां सत्यमेव मयोदितम् ।
शम्भुभक्तस्य देहेऽस्मिन्प्रसादो गम्यते यथा ॥ १२८ ॥
न तथा विष्णुभक्तस्य न मद्भक्तस्य देहिनः ।
तस्मान्मुमुक्षुर्मां विष्णुमपि त्यक्त्वा महेश्वरम् ॥१२९॥
आश्रयेत्सर्वभावेन प्रसादं कुरुते हि सः ।
प्रसादे सति देवेशो दुर्ज्ञेयोऽपि सुरर्षभाः ॥ १३० ॥
शक्यते मनुजैर्द्रष्टुं प्रत्यगात्मतया सदा ।
प्रसादे सति देवेशो दुर्ज्ञेयोऽपि सुरर्षभाः ॥१३१ ॥
शक्यते मनुजैर्द्रष्टुं सदा मूर्त्यात्मनैव तु ।
प्रसादे सति देवेशो दुर्ज्ञेयोऽपि सुरर्षभाः ॥ १३२ ॥
शक्यते मनुजैर्द्रष्टुं सदा सर्वात्मरूपतः ।
सर्वसाक्षिणमात्मानं विदित्वा सकलं जगत् ॥ १३३ ॥
साक्षिमात्रतया नित्यं यः पश्यति स पश्यति ।
परमाद्वैतनिष्ठा हि निष्ठाकाष्ठा सुदुर्लभा ॥ १३४ ॥
शिवादन्यतया भ्रान्त्या द्वैतं वा वेद चेत्पशुः ।
परमाद्वैतविज्ञानी स्वयं तु परदेवता ॥ १३५ ॥
तस्यैव परमा मुक्तिर्न हि संशयकारणम् ।

---

सतीत्यर्थः । प्रागुक्तं शक्तिपातस्वरूपनिरूपणप्रस्तावे चतुस्त्रिंशेऽध्याये ॥ ११८-१३३॥ साक्षिमात्रतयेति सर्वज्ञमीश्वरं दृश्यं जगच्च स्वप्रत्यग्भूताद्वितीयसा-

गौतमस्य मुनेः शापाद्दधीचस्य च शापतः ॥ १३६ ॥
जन्मान्तरकृतात्पापादयमर्थो न रोचते।
महापापवतां नृणां परमाद्वैतवेदने ॥ १३७ ॥
प्रद्वेषो जायते साक्षाद्वेदजन्ये शिवेऽपि च।
महापापवतां नृणां शिवज्ञानस्य साधने ॥ १३८ ॥
सर्वाङ्गोद्धूलने तिर्यक्त्रिपुण्ड्रस्य च धारणे।
रुद्राक्षधारणे रुद्रलिङ्गस्यैव तु पूजने ॥ १३९ ॥
प्रद्वेषो जायते नित्यं शिवशब्दजपेऽपि च।
अनेकजन्मसिद्धानां श्रौतस्मार्तानुवर्तिनाम् ॥ १४० ॥
परमाद्वैतविज्ञानं जायते सुरपुङ्गवाः।
परमाद्वैतविज्ञानी मयाऽऽराध्यः सदैव तु ॥ १४१ ॥
नारायणेन रुद्रेण तथा देवैर्विशेषतः।
परमाद्वैतविज्ञानी यत्र कुत्र स्थितः सुराः ॥ १४२ ॥
तत्र संनिहिता मुक्तिर्नात्र कार्या विचारणा।
परमाद्वैतविज्ञाननिष्ठस्यैव महात्मनः ॥ १४३ ॥
शुश्रूषा क्रियते येन तत्पादौ मम मस्तके।
परमाद्वैतविज्ञाननिष्ठस्य परयोगिनः ॥ १४४ ॥
समं देवा न पश्यामि न हरिर्न महेश्वरः।
परमाद्वैतविज्ञाननिष्ठाय परयोगिने ॥ १४५ ॥
शरीरमर्थं प्राणांश्च प्रदद्याच्छ्रद्धया सह।
परमाद्वैतविज्ञाननिष्ठस्य परयोगिनः ॥ १४६ ॥
शुश्रूषा शुद्धविद्यायाः साधनं हि न संशयः।

वेदबाह्येषु तन्त्रेषु नराणां वासनाऽपि च ॥ १४७ ॥
कुतर्कवासना लोकवासना च सुरर्षभाः ।
पुत्रमित्रकलत्रादौ वासना चार्थवासना ॥ १४८ ॥
देहेन्द्रियमनोबुद्धिप्राणादावपि वासना ।
पाण्डित्यवासना भोगवासना कान्तिवासना ॥ १४९ ॥
प्रद्वेषवासना रुद्रवेदपारायणादिषु ।
ज्ञानसाधनभूतेषु त्रिपुण्ड्रोद्धूलनादिषु ॥ १५० ॥
प्रद्वेषवासना पापवासना सुरपुङ्गवाः ।
परमाद्वैतविज्ञानजन्मनः प्रतिबन्धकम् ॥ १५१ ॥
तस्मान्मुमुक्षुः श्रद्धालुर्वासनामखिलामिमाम् ।
विसृज्य परमाद्वैतज्ञाननिष्ठो भवेत्सदा ॥ १५२ ॥
वेदोदितमहाद्वैतपरिज्ञानस्य वैभवम् ।
न शक्यं वक्तुमस्माभिस्तस्मादेवोपरम्यते ॥ १५३ ॥
कथितमखिलदुःखध्वंसकं वः समस्तं परमसुखशिवात्मप्रापकं सद्य एव । विगतसकलदोषा वेदवेदान्तनिष्ठा हृदयकुहरनिष्ठं कर्तुमर्हन्ति चैतत् ॥ १५४ ॥

इति श्रीस्कान्दपुराणे सूतसंहितायां चतुर्थस्य यज्ञवैभवखण्डस्योपरिभागे ब्रह्मगीतासूपनिषत्सु तलवकारोपनिषद्व्याख्याकथनं नाम चतुर्थोऽध्यायः ॥ ४ ॥

---

क्षिचिन्मात्रतया यः पश्यति स एव यथार्थदर्शीत्यर्थः । निगदव्याख्यानमन्यत् ॥ १३४—१५४ ॥

इति श्रीसूतसंहितातात्पर्यदीपिकायां चतुर्थस्य यज्ञवैभवखण्डस्योपरिभागे तलवकारोपनिषद्व्याख्याकथनं नाम चतुर्थोऽध्यायः ॥ ४ ॥

# अथ पञ्चमोऽध्यायः ।

## ५ आदेशकथनम्

ब्रह्मोवाच—

अतीव गुह्यमादेशमनन्तार्थप्रकाशकम् ।
वक्ष्ये युष्माकमद्याहं शृणुत श्रद्धया सह ॥ १ ॥
यस्य श्रवणमात्रेण श्रुतमेवाश्रुतं भवेत् ।
अमतं च मतं ज्ञातमविज्ञातं च सत्तमाः ॥ २ ॥
एकेनैव तु पिण्डेन मृत्तिकाया यथा सुराः ।
विज्ञातं मृन्मयं सर्वं मृदभिन्नत्वतः सदा ॥ ३ ॥

---

अथ सामशाखान्तरोपनिषदोऽप्युदीरितब्रह्मात्मैकत्वपरत्वमध्यायद्वयेन प्रतिपाद्यते । अत्र हि श्रुतौ निष्प्रपञ्चमद्वितीयं ब्रह्म स्वात्मत्वेनोपदेष्टुं कार्यप्रपञ्चस्य कारणभूताद्ब्रह्मणोऽनन्यत्वेनैकविज्ञानात्सर्वविज्ञानं प्रतिज्ञाय सदृष्टान्तमुपपादितं "उत तमादेशमप्राक्ष्यः । येनाश्रुतं श्रुतं भवति" इत्यादिना "एवं सोम्य स आदेशो भवति" इत्यन्तेनैतां श्रुतिं तात्पर्यतः संगृह्णाति—अतीवेत्यादिना । अतीव गुह्यमत्यन्तं रहस्यम् । उपदेशगम्यमिति यावत् । आदिश्यते ज्ञाप्यते तदद्वितीयं सद्ब्रह्मानेनेत्यादेशः । यद्वाऽऽदिश्यत इत्यादेशः इति कर्मणि व्युत्पत्त्योक्तविधं ब्रह्मैवाऽऽदेशशब्दार्थः । अनन्तार्थप्रकाशकमिति । अपरिच्छिन्नार्थप्रकाशकं ब्रह्म स्वात्मनि परिकल्पितस्य सकलस्य जडप्रपञ्चस्य भासकम् ॥ १ ॥ स आदेशो विशेष्यते—यस्येति । यस्य खलु कारणभूतस्य सद्रूपस्य ब्रह्मणः । कर्मणि षष्ठी । ब्रह्मविषयेण श्रुतिजनितज्ञानेनाश्रुतं श्रुतिजनितज्ञानाविषयीकृतमपि सर्वं कार्यं जगत्स्व कारणब्रह्मानन्यतया श्रुतमेव भवेत् । तथाऽमतमतर्कितमपि कार्यं जगद्यन्मननेन मतं तार्कितं भवति । तथैवाविज्ञातमनिश्चितमपि तद्यद्गोचरनिश्चयज्ञानेन तदनन्यतया विज्ञातं निश्चितमेव भवति तथाविधमादेशमिति संबन्धः ॥ २ ॥ नन्वन्यस्मिन्विज्ञाते कथमन्यद्विज्ञातुं शक्यत इत्याशङ्क्य कारणभूतस्य ब्रह्मणः कार्याज्जगतोऽनन्यत्वं दृष्टान्तैरुपपादयति—

एकेन लोहमणिना सर्वं लोहमयं यथा।
विज्ञातं स्याद्यथैकेन नखानां कृन्तनेन च।
सर्वं कार्ष्णायसं ज्ञातं तदभिन्नत्वतः सुराः॥ ४॥
कार्यं तु कारणाभिन्नं न भिन्नं नोभयात्मकम्॥ ५॥
भिन्नपक्षे तु सद्वाऽसत्कार्यं सदसदेव वा।
सच्चेत्कारणसत्ता वा कार्यसत्ताऽथवा परा॥ ६॥
यदि कारणसत्तैव कार्यसत्ता न चापरा।
तर्हि कारणसत्तैका कथं सत्ताभिदा भवेत्॥ ७॥
सत्तैकाऽपि भवेद्भिन्नं कारणात् कार्यसंज्ञितम्।
इति वार्ता च वार्तैव कार्यसंज्ञमसत्खलु॥ ८॥
सत्ताहीनस्य कार्यस्यासत्त्वमेव हि युज्यते।
प्राप्तेऽसत्त्वे तु कार्यस्य सत्कार्योक्तिर्वृथा भवेत्॥ ९॥

---

एकेनैवेत्यादिना। मृदभिन्नत्वत इति। कारणत्वेनानुगृहीतमृद्व्यतिरेकेण घटादिकार्यस्य पृथगलब्धात्मकत्वात्तदभिन्नत्वम्॥ ३॥ ४॥ नन्वेवं कारणाद्ब्रह्मणः कार्यस्य जगतोऽनन्यत्वे तस्य सविशेषत्वापत्तिरित्यवश्यं जगतस्तद्भिन्नत्वमेवैष्टव्यमित्यत आह—कार्यं त्विति। न भिन्नमिति प्रतिज्ञातमर्थं साधयितुं विकल्पयति—भिन्नपक्ष इति। तत्राऽऽद्यं पक्षमनुवदति—सच्चेदिति॥ ५॥ ६॥ सा किं कार्यगतसत्ता कारणसत्तैवोत ततोऽन्येति विकल्प्याऽऽद्ये कार्यस्यासत्त्वमेवाऽऽयातमिति प्रतिपादयति—तर्हीति। करणसत्तैव चेत्कार्यस्य सत्ता तर्हि सा चैकेति कार्यस्य पृथक्सत्त्वाभावात्कारणाभिन्नत्वमेवेत्यर्थः॥ ७॥ नन्वेवं सत्ताया एकत्वेऽपि कारणात्कार्यं पृथगेवानुभूयत इतीमामाशङ्कामनूद्य निराचष्टे—सत्तेति। कारणसत्तैव कार्यसत्तेत्यङ्गीकारात्स्वभावतः कार्यमसदेवोपपन्नमिति भिन्नं कार्यं सदित्येतद्वार्तामात्रमित्यर्थः॥ ८॥ एतदेवासत्यत्वमुपपादयति—सत्ताहीनस्येति।

नैव कारणसत्तैव कार्यसत्ताऽपरैव चेत्।
तर्हि सा कार्यसत्ता तु तया कारणसत्तया ॥ १० ॥
सद्रूपेणैव भिन्ना स्यादसद्रूपेण वा भवेत्।
सद्रूपेणेति चेदेका सत्ता भिन्ना न सा भवेत्॥ ११ ॥
असद्रूपेण सा भिन्ना कार्यसत्ता तया यदि।
तर्हि सा नैव सत्ता स्यादसत्त्वादेव शून्यवत् ॥ १२ ॥
यद्यसत्कार्यमिष्येत न कार्यं तर्हि तद्भवेत्।
वन्ध्यापुत्रो न कस्यापि वस्तुनः कार्यमिष्यते ॥ १३ ॥
प्रध्वंसोऽपि न कार्यं स्यात्तस्योत्पत्तेरसंभवात्।
नास्ति कारकसंबन्धः प्रध्वंसस्य सुरोत्तमाः।
शून्यवन्निरुपाख्यत्वात्ततो नास्ति जनिक्रिया ॥ १४ ॥

सत्ताहीनस्य कार्यस्य नरविषाणवदसत्त्वमेव हि युक्तम्। न ह्यन्यदीयसत्तयाऽन्यत्सद्भवति। नरविषाणस्यापि सत्त्वप्रसङ्गादित्यर्थः। अत एवास्मिन्पक्षे कार्यस्यासत्त्वे सति सत्कार्यमिति वचनं निरर्थकमित्यर्थः ॥ ९ ॥ एवं तर्हि कारणसत्तातोऽन्यैव कार्यसत्तेति द्वितीयः कल्पोऽस्त्वित्याशङ्कते—नैवेति। तन्निराकरोति—तर्हीति ॥ १० ॥ कारणसत्तातः पृथग्भूता सा कार्यसत्ता किं सद्रूपेण भिन्नोतासद्रूपेणेति विकल्प्याऽऽद्यं प्रत्याह—सद्रूपेणेति चेदिति। उभयोरपि सत्तयोः सद्रूपेणैकरूप्यावगमात्तेन रूपेण भेदो न युक्त इत्येकैव सत्ता भवेदित्यर्थः ॥ ११ ॥ द्वितीयमनूद्य दूषयति—असद्रूपेण सा भिन्नेति। सा सत्तैव न भवति शशविषाणवदसत्त्वादेवेत्यर्थः ॥ १२ ॥ एवं सत्कार्यपक्षं निराकृत्यासदेव कार्यं कारणाद्भिन्नमिति पक्षमपि निराकरोति। यद्यसदिति। प्रागसतः सत्तासंबन्धो ह्युत्पत्तिः परैरभिमता। सा च वन्ध्यासुतवदसतः कार्यस्य न संभवतीति तस्य कार्यत्वमेव हीयेतेत्यर्थः ॥ १३ ॥ ननु प्रध्वंसाभाववदसतोऽपि कार्यता किं न स्यादित्यत आह—प्रध्वंसोऽपीति। प्रध्वंसस्यापि कार्यत्वं न संभवति। उदीरितलक्षणाया उत्पत्तेस्तत्रायोगात्। उत्प-

तच्च द्वैतं दृशोर्दृश्यं नास्ति द्रष्टाऽस्ति केवलम् ॥ ३२ ॥
एषाऽस्य परमा संपद्गतिश्च परमाऽस्य तु ।
एषोऽस्य परमो लोक एतद्धि परमं सुखम् ॥ ३३ ॥
अहिनिर्ल्वयनीं मुक्तां यथाऽहिः स्वात्मना पुनः ।
न पश्यति तथा विद्वान्न देहेऽहंमतिर्भवेत् ॥ ३४ ॥

श्रुतिर्व्याख्याता । ननु सा दृष्टिः सर्वदा विद्यते चेत्तयैव सर्वदा दृश्यजगत्प्रतिभासः कुतो नेत्यत आह—दृश्यमेवेति । हि यस्माद्दृश्यं दृग्विषयं द्वैतं जगन्न पश्यति । अधिष्ठानयाथात्म्यज्ञानेन प्रतिपन्नोपाधौ विलापितं भवति । अतो विषयाभावकृत एव विशेषाप्रतिभासो न तु चित्स्वरूपविपरिलोपकृत इत्यर्थः । अतस्तद्द्वैतं दृशोः प्रत्यगात्मस्वरूपप्रकाशेन प्रकाश्यं समाधिसुषुप्त्याद्यवस्थासु नैवास्ति । द्रष्टा चिदात्मैव केवलं विद्यते । एतेन "न तु तद्द्वितीयमस्ति" इत्यादिश्रुतिरुक्तार्था भवति ॥ ३२ ॥ एवमद्वितीयात्मज्ञाननिष्ठस्य यद्गत्यादीनां निरतिशयत्वमाम्नायते "एषाऽस्य परमा गतिः" इत्यादिना तत्संगृह्णाति—एषाऽस्येति । यत्र नान्यत्पश्यति नान्यच्छृणोति नान्यद्विजानाति सैषा ब्रह्मनिष्ठा परमा संपत् । इतरासां संपदां कृतकत्वेनानित्यत्वान्नित्याद्वितीयब्रह्मात्मनिष्ठैव विशिष्टा संपदित्यर्थः । तथैषैवास्य विदुषो गतिः परमा । ब्रह्मादिस्तम्बपर्यन्तास्वन्या गतयोऽविद्यापरिकल्पितत्वादपरमा इत्यर्थः । तथाऽस्य विदुष एष एव परमो लोकः । ये कर्मफलाश्रया लोकास्तेऽपरमाः । उदीरितब्रह्मात्मनिष्ठा तु स्वाभाविकत्वान्न केनचित्कर्मणा जायत इति निरतिशयत्वाल्लोक्यमानत्वाच्च परमो लोक इत्यर्थः । एतदेव हि परमं सुखं यन्निरतिशयानन्दब्रह्मात्मभावेनावस्थानं तत्खलु नित्यत्वात्परमं वैषयिकसुखं ह्यनित्यत्वादपरमं तल्लेशभूतत्वादुपेक्षणीयमित्यर्थः ॥ ३३ ॥ एवं ब्रह्मीभूतः पुरुषः पुनः कार्यकारणसंघातं नाऽऽत्मत्वेनाभिमन्यत इत्येतत्सदृष्टान्तं श्रुत्या प्रतिपादितम् "तद्यथाऽहिनिर्ल्वयनी वल्मीके मृता" इत्यादिना तत्संगृह्णाति—अहिनिर्ल्वयनीं मुक्तामिति । अहिनिर्ल्वयनी सर्पत्वक् । सर्पाश्रये वल्मीकादौ निर्मुक्तां तां त्वचं यथाऽहिः सर्पः पुनः स्वात्मभावेन न पश्यति । एवं ब्रह्म विद्वानपि विविक्तं देहादिकं

सर्वाधारे स्वतःसिद्धे शिवसंज्ञे तु निर्मले ।
प्रत्यग्रूपे परानन्दे नेह नानाऽस्ति किंचन ॥ ३५ ॥
मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति ।
तस्माद्ध्यस्तमज्ञानं तत्कार्यं चाऽऽत्मरूपतः ॥ ३६ ॥
एकधैव महायासाद्द्रष्टव्यो हि मुमुक्षुभिः ।
अयमात्माऽप्रमेयश्च विरजश्च महान्ध्रुवः ॥ ३७ ॥

---

न कदाऽप्यात्मभावेनाभिमन्यत इत्यर्थः ॥ ३४ ॥ अपि च । देहाद्यात्मभावस्य भेदाधीनत्वात्तस्य चानिरूपणादित्यभिप्रेत्य तन्निषेधश्रुतिमुदाहरति—नेह नानाऽस्तीति । अत्रेहेति सप्तम्यन्तेन यन्निषेधाधिकरणत्वेन निर्दिष्टं तद्विवृणोति—सर्वाधार इति । यस्मादुक्तविधं ब्रह्म द्वैतजगत्प्रतिभासस्याधिष्ठानमतस्तदेव तन्निषेधस्यावधिरिति यदुक्तं द्वैतप्रपञ्चवत्तस्याप्यध्यस्तत्वशङ्कां वारयति—स्वतःसिद्ध इति । स्वत एव सिद्धं न पुनरधिष्ठानान्तरेऽध्यस्तत्वेनान्याधीनसत्ताकमिति यावत् । निर्मल इति मायाया व्युदासः । एवंभूते शिवसंज्ञे प्रत्यग्रूपेणावस्थितेऽस्मिन्नात्मनि पृथग्भूतं किमपि वस्तु परमार्थतो नास्तीत्यर्थः ॥ ३५ ॥ श्रुत्युक्तं विपक्षे बाधकमुदाहरति—मृत्योरिति । योऽस्मिन्प्रत्यगात्मभावेनावस्थिते ब्रह्मणि भेदं पश्यत्यहमन्योऽन्यज्जगदीश्वरादिकमिति सोऽयमविद्यावशीकृतः सन्मृत्योर्मरणात्पुनर्मृत्युं मरणं प्राप्नोति पुनः पुनर्जायमानो म्रियमाणश्च भवतीत्यर्थः । अत उक्तविधमद्वितीयात्मदर्शनमेव प्रशस्तमिति निगमयति—तस्मादिति । यदेवं पारमार्थिको भेदो नास्ति तस्मादज्ञानं तत्कार्यं च वियदादिभूतभौतिकं जगच्च सर्वमद्वितीये ब्रह्मण्यध्यस्तम् । अतश्चेदं सर्वमधिष्ठानात्मरूपेणैकप्रकारेणैव द्रष्टव्यम् । यस्मादेकधैवेत्ययमुत्तरशेषः ॥ ३६ ॥ एवं ह्याम्नातम्—'एकधैवानुद्रष्टव्यमेतदप्रमेयमजं ध्रुवम्' इति । तस्यायमर्थः । एकधैवैकेनैव प्रकारेण विज्ञानघनैकरसत्वलक्षणेनायमात्मा मुमुक्षुभिर्महायासाद्द्रष्टव्यः । शान्तिदान्त्यादि-

तमेव धीरो विज्ञाय प्रज्ञां कुर्वीत ब्राह्मणः ।
नानुध्यायाद्बहूञ्शब्दान्वाचो विग्लापनं हि तत् ॥ ३८ ॥
स वा एष महानात्मा जन्मनाशविवर्जितः ।
वशी सर्वस्य लोकस्य सर्वस्येशान एव च ॥ ३९ ॥

---

लक्षणसाधनकलापानुष्ठानजनितं महायासं प्राप्याऽऽत्मसाक्षात्कारः संपादनीयः । महायासादिति कर्मणि ल्यब्लोपे पञ्चमी । ननु दृग्रूप आत्मा चेद्द्रष्टव्यस्तर्हि दृशिकर्मत्वाद्घटवत्तस्य दृश्यत्वं स्यादित्यत आह—अप्रमेयश्चेति । अन्यत्खल्वन्येन प्रमीयते । अद्वितीयस्त्वात्मा कथमन्येन प्रमेयः स्यादतः स्वविषयसाक्षात्कारे संजाते सति स्वरूपप्रकाशेनैव प्रकाशत इति भवत्यसावप्रमेयः । विरजश्चेति । रजो नाम धर्माधर्मादिमलं तद्रहितः । महान्सर्वकारणत्वेन सर्वव्यापी । ध्रुवः कूटस्थनित्यः ॥ ३७ ॥ 'तमेव धीर' इति मन्त्रं संगृह्णाति—तमेवेति । तमुक्तविधमात्मानमेव धीरो धीमानुपदेशतः शास्त्रतश्च विज्ञाय पुनस्तद्विषयां साक्षात्काररूपिणीं प्रज्ञां कुर्वीत । न खल्वपरोक्षभ्रमः परोक्षज्ञानेन निवर्तत इति भावः । एवमात्मविदनात्मविषयान्बहूञ्शब्दान्नानुध्यायान्नानुचिन्तयेत् । ध्यायतेर्लेट्याडागमः । कुत इत्यत आह—वाच इति । हि यस्मात्तद्बहुशब्दानुचिन्तनं वाचो विग्लापनं वागिन्द्रियस्य विशेषेण ग्लानिकरं तस्मादित्यर्थः ॥ ३८ ॥ उक्तवक्ष्यमाणकृत्स्नोपनिषत्प्रतिपादनपरा 'स वा एष महानज आत्मा' इत्यादिका येयं कण्डिका समाम्नाता तां संगृह्णाति—स वा एष इति । तत्र तावद्ध्येयस्वरूपं प्रतिपाद्यते । स पूर्वोक्तो जगत्कारणभूत एष हृन्मध्येऽवस्थितो योऽयं महानपरिच्छिन्न आत्मा जन्मनाशादिसकलसांसारिकभावविकाररहितः स एव सर्वस्य ब्रह्मेन्द्रादिजनस्य वशी सर्वो ह्यस्य वशे वर्तते । आम्नायते हि—'भीषास्माद्वातः पवते । भीषोदेति सूर्यः' इत्यादि । न केवलं वशी । तस्य च ब्रह्मादिस्तम्बान्तस्य सर्वस्येशान ईशिता च भवति ॥ ३९ ॥ तत्रेशानत्वं निरङ्कुशमित्याह—सर्वस्याधिप-

सर्वस्याधिपतिः शुद्धो न भूयान्साधुकर्मणा ।
कर्मणाऽसाधुना नैव कनीयान्सुरपुङ्गवाः ॥ ४० ॥
एष सर्वेश्वरः साक्षाद्भूताधिपतिरेव च ।
भूतपालश्च लोकानामसंभेदाय हे सुराः ॥ ४१ ॥
एष सेतुर्विधरणस्तमेव ब्राह्मणोत्तमाः ।
वेदानुवचनेनापि यज्ञेन सकलेन च ॥ ४२ ॥

---

तिरिति । अधिपतिरधिष्ठाय पालयिता । स्वतन्त्र इत्यर्थः । यो ह्यधिष्ठाय पालयति स ईष्टे यश्चेशानः स वशी भवत्येवं त्रयाणां विशेषणानामुत्तरोत्तरस्य पूर्वपूर्वहेतुत्वं द्रष्टव्यम् । यतोऽयमात्मा शुद्धोऽनाधेयातिशयस्वरूपः । अतः साधुना शास्त्रविहितेनाग्निहोत्रादिकर्मणा न भूयान्भवति । पूर्वावस्थातः केनचिद्धर्मेणोपचितो न भवतीत्यर्थः । तथाऽसाधुना शास्त्रप्रतिषिद्धेन ब्रह्महननादिना कनीयानल्पतरोऽपि न भवति । पूर्वावस्थातो न हीयत इत्यर्थः । कर्मवशीकृतस्य ह्यात्मनः साध्वसाधुकर्मजन्यातिशयभाक्त्वं संभवति । एष तु निरुपाधिक आत्मा सर्वेश्वरः कर्मसहितस्य सर्वस्य जगत ईशनशीलः । अतस्तत्परतन्त्रे साध्वसाधुकर्मणी तस्मिन्नुपचयापचयलक्षणं विकारं जनयितुं न प्रभवत इत्यर्थः ॥ ४० ॥ तथा साक्षादेष एव प्रत्यगात्मा ब्रह्मादिस्तम्बान्तानां सर्वेषां भूतानामधिपतिः । तथा तानि भूतानि पालयतीति भूतपालः । लोकानां भूरादीनां ब्रह्मलोकान्तानामसंभेदाय तत्तन्मर्यादायाः संभेदोऽतिक्रमो मा भूदित्येतदर्थम् ॥ ४१ ॥ एष एवाऽऽत्मा विधरणो वर्णाश्रमादिव्यवस्थाया विधारयिता सन्सेतुर्भवति । यथा लौकिकः सेतुरसंभेदहेतुस्तद्वदयं भवतीत्यर्थः । अयं भावः । तत्प्रणीतश्रुतिस्मृत्युक्तमार्गं योऽनुतिष्ठति तज्जन्यसुकृतेन संसारार्णवं संतारयतीति सेतुः । एवं वेद्यस्वरूपं प्रतिपाद्य तद्विद्योत्पत्तौ वेदानुवचनादेर्यत्साधनत्वमाम्नातम्—'तमेतं वेदानुवचनेन' इत्यादि तत्संगृह्णाति—तमेवेति । मन्त्रब्राह्मणात्मकस्य कृत्स्नस्य वेदस्य

दानेन तपसा देवास्तथैवानशनेन च ।
वेत्तुमिच्छति यो विद्वान्स मुनिर्नेतरो जनः ॥ ४३ ॥
नेति नेतीति निष्कृष्टो य एष सर्वसाधकः ।
सोऽयमात्मा सदा ग्राह्यस्वरूपो न हि गृह्यते ॥ ४४ ॥

---

यज्ञैस्त्यस्वाध्यायलक्षणमनुवचनं तेन । तथा तत्प्रतिपाद्येन नित्यनैमित्तिकरूपेण यज्ञेनाग्निहोत्रादिना ॥ ४२ ॥ दानेन श्रुतिस्मृतिपुराणविहितेन तुलापुरुषादिना । तथाऽनशनरूपेण तपसा न तु कृच्छ्रचान्द्रायणादिना । अत्रानशनशब्देन कामानशनं विवक्षितं न तु भोजननिवृत्तिः । तथा सति जीवनलोपप्रसङ्गेन विद्यानुत्पत्तिप्रसङ्गात् । एवमेतैर्वेदानुवचनादिभिस्तमुक्तविधमात्मानमेव यो वेत्तुं वेदितुं ज्ञातुमिच्छति । अत्र तृतीयाश्रुत्याऽन्तःकरणशुद्धिद्वारा वेदानुवचनादीनां विविदिषासाधनत्वमुपन्यस्तम् । स चोत्पन्नविविदिषः पुनर्वक्ष्यमाणैः शान्तिदान्त्यादिभिः श्रवणादिभिश्चोत्पन्नया विद्यया तमुदीरितरूपमात्मानं साक्षात्कुर्वन्नेव मननवर्मयोगान्मुनिर्योगी भवति । न त्वितरोऽनात्मज्ञो जनः । तस्य ह्यनात्मविषये सत्यपि मनने कर्मसंबन्धात्कर्मित्वमेव न मुनित्वम् । आत्मवित्तु कृतकर्तव्यत्वात्केवलं मुनिरेव । अनेन च 'एतमेव विदित्वा मुनिर्भवति' इति श्रौतमवधारणं व्याख्यातं भवति ॥ ४३ ॥ सर्वस्य वशी सर्वस्येशान इत्यादिना विधिमुखेन प्रतिपादितस्याऽऽत्मतत्त्वस्य सोपाधिकत्वशङ्का मा भूदित्यधुना व्यतिरेकमुखेन यदवाङ्मनसगम्यं स्वरूपं प्रतिपादितम् 'स एष नेति नेत्यात्मा' इत्यादिश्रुत्या तत्संगृह्णाति—नेति नेतीति । इदमर्थवाचिनेतिशब्देन संनिहितं दृश्यं परामृश्यते । वीप्सया च तस्य सर्वस्य निषेधः । तदयमर्थः—यदिदं दृश्यं द्वैतजातमस्ति तत्सर्वं नेति नेतीति विलाप्य सर्वनिषेधावधिभूतो योऽयं निष्कृष्टो निरस्तसमस्तोपाधिक आत्मा स एष सर्वसाधकः । अविद्याकर्मादिसर्वव्यवहारनिष्पादकः । नातोऽन्यः कश्चित्कर्ता भोक्ता परमार्थतो विद्यत इत्यर्थः ।

तथाऽशीर्यस्वभावश्च हे देवा नैव शीर्यते ।
असङ्गरूपो भगवान्सर्वदा न हि सज्जते ॥ ४५ ॥
एष नित्यो महिमा ब्राह्मणस्य
न वर्धते कर्मणा नो कनीयान् ।
तस्यैव स्यात्पदवित्तं विदित्वा
न लिप्यते कर्मणा पापकेन ॥ ४६ ॥

---

तस्य च सर्वनिषेधावधिभूतस्याऽऽत्मनः स्वाभाविकं रूपमाह—सोऽयमिति । योऽयमुदीरितरूपः प्रत्यगात्मा सर्वदा हस्तपादादिभिरिन्द्रियैरग्राह्यस्वभावः । न ह्यसौ केनचिदिन्द्रियेण गृह्यते । इन्द्रियाणां रूपादिमद्वस्तुविषयत्वात् ॥ ४४ ॥ तथाऽयमात्माऽध्यस्तप्रपञ्चवद्विशरणशीलस्वरूपोऽपि न भवति । न खल्वसौ शीर्यते । निरवयवत्वेन विशरणासंभवात् । अतो दृश्यनिषेधावधिभूतं तत्त्वं सर्वदा बाधविधुरस्वरूपमित्यर्थः । ननूपगमापगमधर्मवतो दृश्यस्य संपर्कवशात्तदधिष्ठानस्याऽऽत्मनोऽपि विकारः किं न स्यादित्यत आह—असङ्गरूप इति । पद्मपत्रवन्निर्लेपस्वरूपः । न ह्यसौ क्वचित्सज्जत आत्मीयत्वेन क्वचिदप्यभिमानाभावात् । आसक्तिहेतोर्दृश्यस्य च मिथ्याभूतस्य परमार्थतयाऽऽसञ्जकत्वासंभवात् । न हि मरुमरीचिकाजलैर्मरुभूमिरार्द्रीक्रियत इति भावः ॥ ४५ ॥ 'तदेतदृचाऽभ्युक्तम्' इति श्रुत्या प्रतिपादितार्थसंवादित्वेनोदाहृतमृङ्मन्त्रं संगृह्णाति—एष नित्य इति । स एष नेति नेत्यात्मेति श्रुत्याऽतद्व्यावृत्तिमुखेन यदात्मनः स्वरूपं प्रतिपादितमेष एव ब्राह्मणस्य ब्रह्मविदो नित्यो महिमा अन्ये तु महिमानः कर्मकृतत्वादनित्याः । अयं तु स्वाभाविकत्वान्नित्य इत्यर्थः । कुत इत्यत आह—न वर्धत इति । पुण्यपापरूपेण द्विविधेन कर्मणा वृद्ध्यवृद्धिलक्षणां विक्रियां न प्राप्नोति । विकारहेतुसङ्गविरहस्य प्रतिपादितत्वात् । अतो निर्विकारत्वादेष एव नित्यो महिमेत्यर्थः । तथा च तस्यैव महिम्नः

तस्माद्ब्रह्मज्ञानलाभाय विद्वान्
शान्तो दान्तः सत्यवादी भवेच्च ।
कर्मत्यागी सर्ववेदान्तसिद्धं
विद्याहेतुं संततं त्वभ्युपेयात् ॥ ४७ ॥
त्रिपुण्ड्रमुद्धूलनमास्तिकोत्तमाः
सदाऽऽचरेच्छंकरवेदने रतः ।
शिवादिशब्दं च जपेद्विशेषतः
प्रपूजयेद्भक्तिपुरःसरं हरम् ॥ ४८ ॥

---

पदवित्स्यात् । पद्यते गम्यते ज्ञायत इति पदं स्वरूपं तस्य पदस्य वेदिता भवेदित्यर्थः । तद्वेदनस्य फलमाह—तं विदित्वेति । तं नित्यमहिमरूपमात्मानं साक्षात्कृत्य विद्वान्पापकेन कर्मणा न लिप्यते । अत्र पापशब्देन पापवत्पुण्यस्यापि संसारहेतुत्वात्तदुभयं विवक्षितम् । अतः संसारहेतुभूतेन पुण्यपापरूपेण द्विविधेन कर्मणा लेपो विदुषो विद्यया निवर्त्यत इत्यर्थः ॥ ४६ ॥ तत्र विद्योत्पत्तौ बहिरङ्गसाधनानि वेदानुवचनादीनि प्राग्दर्शितानि । अथ 'तस्मादेवंविच्छान्तो दान्तः' इत्यादिश्रुतिप्रतिपादितान्यन्तरङ्गसाधनानि दर्शयति—तस्मादिति । यस्मादद्वितीयात्मविज्ञानस्येदृग्विधं फलं तस्मात्तल्लाभाय शान्त्यादिगुणयुक्तो भवेत् । तत्र शान्तो बाह्येन्द्रियव्यापारादुपरतः । दान्तो मानसविषयतृष्णाभ्यो निवृत्तः । सत्यवादीति । एतच्च सत्यवदनं कृत्स्नयोगाङ्गोपलक्षणम् । कर्मत्यागीति श्रुतिगतोपरतपदस्य व्याख्यानम् । लोकान्तरसाधनानि विद्याया विरोधीनि यानि कर्माणि तत्त्यागी भूत्वेत्यर्थः । सर्ववेदान्तसिद्धमिति । श्रोतव्यो मन्तव्य इत्यादिवेदान्तप्रतिपादितं श्रवणमननादिकं विद्याहेतुं निरन्तरमुपगच्छेदित्यर्थः ॥ ४७ ॥ तथा जाबालोपनिषदादिषु प्रतिपादितं त्रिपुण्ड्रधारणादिकमपि शिवप्रीतिकरत्वेन परविद्योत्पत्तावन्तरङ्गसाधनमित्याह—त्रिपुण्ड्रमिति ॥ ४८ ॥ साधनैः सकलैरित्यादि ।

साधनैः सकलैः सहितः सुरा
वेदनेन समस्तमिदं जगत् ।
देवरूपतयैव तु निश्चितं
वेद हस्ततलस्थितबिल्ववत् ॥ ४९ ॥
नैनं पाप्मा तरति ब्रह्मनिष्ठं
सर्वं पापं तरति प्राकृतं च ।
नैनं पाप्मा तपति ब्रह्मनिष्ठं
सर्वं पापं तरति प्राकृतं च ॥ ५० ॥

---

वेदानुवचनादिभिः शान्तिदान्त्यादिभिः श्रवणमननादिभिश्चेत्यर्थः । हस्ततलेति । हस्ततलस्थितबिल्वफलवत्सर्वस्य दृश्यजातस्य परशिवस्वरूपत्वमापरोक्ष्येण यो वेद जानाति ॥ ४९ ॥ तस्य किं भवतीत्येतत्प्रतिपादयति—नैनमिति । एवं सम्यग्ज्ञानिनं पाप्मा पुण्यपापलक्षणो न तरति नातिक्रामति स एव ब्रह्मविद्भवपरंपरोपभोग्यफलं तत्सर्वं पुण्यपापमतिक्रामति । तथा यच्चान्यत्प्राकृतं मायामयं कार्यजातमस्ति तत्सर्वमतिक्रामति । एवं हि श्रूयते—'एतमु हैवैते न तरत इत्यतः पापमकरवमित्यतः कल्याणमकरवमित्युभे उ हैवैष एते तरति नैनं कृताकृते तपतः' इति । तत्र च कृताकृतयोरुभयोरपि पुण्यपापयोस्तरणीयत्वमतापकत्वं च प्रतिपादितम् । अतोऽत्रापि पापग्रहणमुभयोरुपलक्षणार्थं द्रष्टव्यम् । नैनं पाप्मा तरतीति श्रुतिं व्याख्याय नैनं पाप्मा तपतीत्यतापकत्वप्रतिपादिकां श्रुतिमपि संगृह्णाति—नैनमिति । कृताकृतलक्षणः पुण्यपापरूपः पाप्मैनं ब्रह्मविदं न तपति । ब्रह्मविदेवाऽऽत्मज्ञानाग्निना सर्वं निर्दहति । कृताकृतयोः पुण्यपापयोरतापकत्वं तैत्तिरीयकेऽप्याम्नातम्—'एतँ ह वाव न तपति किमहं साधु नाकरवं किमहं पापमकरवम्' इति । तथा गीतास्वात्मज्ञानस्य कृत्स्नपापनिर्दाहकत्वं भगवताऽप्युक्तम्—'यथैधांसि समिद्धोऽग्निर्भस्मसात्कुरुतेऽर्जुन । ज्ञानाग्निः सर्वकर्माणि भस्मसात्कुरुते तथा ॥'

इत्थं ब्रह्म स्वात्मभूतं विदित्वा
श्रद्धापूर्वं देहमेतं स्वकीयम् ।
अर्थं सर्वं क्षेत्रजातं समस्तं
दद्यादस्मै देशिकेन्द्राय मर्त्यः ॥ ५१ ॥
यश्चाऽऽतृणत्त्यवितथेन कर्णा-
वदुःखं कुर्वन्नमृतं संप्रयच्छन् ।
तं विद्यात्पितरं मातरं च
तस्मै न द्रुह्येत्कृतमस्य जानन् ॥ ५२ ॥
स्वदेशिकस्यैव शरीरचिन्तनं
भवेदनन्तस्य शिवस्य चिन्तनम् ।
स्वदेशिकस्यैव तु पूजनं तथा
भवेदनन्तस्य शिवस्य पूजनम् ॥ ५३ ॥

---

इति ॥ ५० ॥ 'सोऽहं भगवते विदेहान्ददामि मां चापि सह दास्या-येति' इति श्रुत्या स्वात्मसहितं सर्वस्वं ब्रह्मोपदेशकारिणे गुरवे देयमिति प्रतिपादितं तदप्याह—इत्थमिति ॥ ५१ ॥ तथाविधस्य गुरोर्मातापितृ-रूपत्वेन सर्वदा द्रोहो न कार्य इत्यस्यार्थस्य प्रतिपादकं यास्कोदाहृतमपि मन्त्रं स्वयं दर्शयति—य इति । अवितथेन परमार्थोपदेशेन यो गुरुः कर्णावातृणत्त्याविध्यति । किं कुर्वन्नदुःखं दुःखमकुर्वन् । लौकिकं हि कर्णभेदनं दुःखहेतुर्भवति । न केवलं दुःखाकरणमात्रम् । अपि तह्यमृत-मनश्वरमात्मस्वरूपं संप्रयच्छन् । स्वस्वरूपभूतोऽप्यात्मा प्रागज्ञानावृ-तत्वेन नष्टप्राय आसीत्पुनर्गुरोरुपदेशेन कण्ठगतचामीकरवत्पुनर्लभ्यमानो भवतीत्यभिप्रायः । तममृतत्वस्य प्रदातारं गुरुमेव मातापितृबुद्ध्या जानी-यात् । स्मर्यते हि—'स हि विद्यातस्तं जनयति तच्छ्रेष्ठं जन्म शरीरमेव मातापितरौ जनयतः' इति । अतः कारणादस्य गुरोः संबन्धि कृतममृ-तत्वसाधनब्रह्मात्मज्ञानोपदेशरूपं कर्म जानन्कृतज्ञतया तस्मै कदाचिदपि

स्वदेशिकस्यैव तु नामकीर्तनं
शिवादिशब्दस्य तु कीर्तनं भवेत् ।
स्वदेशिकस्यैव तु बाधनं तथा
भवेदनन्तस्य शिवस्य बाधनम् ॥ ५४ ॥
तस्माद्विद्वान्सर्वमेताद्विहाय
श्रद्धायुक्तः सद्गुरुं सत्यनिष्ठम् ।
विद्याकोशं वेदवेदान्तनिष्ठं
गच्छेन्नित्यं सत्यधर्मादियुक्तः ॥ ५५ ॥
वक्तव्यं सकलं मया परकृपायुक्तेन संकीर्तितं
कर्तव्यं सकलं सुरा न हि मुनेर्ब्रह्मात्मनिष्ठस्य तु ।
स्मर्तव्यं सकलं तथा न हि सदा ब्रह्मैव सच्चित्सुखं
संपूर्णं सततोदितं समरसं शश्वत्स्वयं भासते ॥ ५६ ॥

इति श्रीसूतसंहितायां यज्ञवैभवखण्डस्योपरिभागे ब्रह्मगीतासु बृहदारण्यव्याख्याकथनं नाम दशमोऽध्यायः ॥ १० ॥

॥ एकादशोऽध्यायः ॥

११. ब्रह्मणः सर्वशरीरस्थितिः ।

ब्रह्मोवाच—

अस्ति तत्त्वं परं साक्षाद्दुर्दर्शं गूढमुत्तमम् ।

---

द्रोहो न कार्यः ॥ ५२ ॥ इमं मन्त्रार्थं प्रपञ्चयति—स्वदेशिकस्येत्यादिना ॥ ५३—५५ ॥ समरसमखण्डैकरसम् ॥ ५६ ॥

इति श्रीसूतसंहितातात्पर्यदीपिकायां यज्ञवैभवखण्डस्योपरिभागे ब्रह्मगीतासु बृहदारण्यकव्याख्याकथनं नाम दशमोऽध्यायः ॥ १० ॥

एवं बृहदारण्यकोपनिषदो ब्रह्मात्मैक्यपरत्वं व्याख्याय गतिसामान्यं दर्शयितुं कठवल्ल्युपनिषदोऽप्यैदंपर्यं प्रतिपादयितुमयमध्याय आरभ्यते—

अनुप्रविष्टं सर्वत्र गुहायां निहितं परम् ॥ १ ॥
तद्विदित्वा महाधीरो हर्षशोकौ जहाति च ।
धर्मादिभ्यः परं तत्तु भूताद्भव्याच्च सत्तमाः ॥ २ ॥
यदामनन्ति वेदाश्च तपांसि परमं पदम् ।
ब्रह्मचर्यं यदिच्छन्तश्चरन्ति शिव एव सः ॥ ३ ॥
एतद्ध्येवाक्षरं ब्रह्म एतद्ध्येवाक्षरं परम् ।
एतद्ध्येवाक्षरं ज्ञात्वा यो यदिच्छति तस्य तत् ॥ ४ ॥

---

अस्ति तत्त्वमिति । तत्र च तं दुर्दर्शमित्यतः प्राक्तनस्य मन्त्रसंदर्भस्याऽऽख्यायिकारूपत्वेन विद्यास्तुत्यर्थत्वात्परित्यज्य विद्यास्वरूपोपयोगिनस्तं दुर्दर्शमित्यादिका एव मन्त्राः स्वरूपतोऽर्थतश्च संगृह्यन्ते । यत्र समानः पाठस्तत्र न पृथक्श्रुतिरुदाहर्तव्या । यत्र तु पाठे विशेषस्तत्र मूलभूतां श्रुतिमप्युदाहरामः । तदयमर्थः । दुर्दर्शं दुःखेन दर्शनीयमतिसूक्ष्मत्वाज्ज्ञातुमशक्यम् । गूढं गहनं स्थानमनुप्रविष्टम् । प्राकृतविषयज्ञानैः संछन्नमित्यर्थः । गुहायां बुद्धौ निहितं स्थितम् । विकारजातेभ्यः परमीदृग्विधमात्मतत्त्वं विद्यते ॥ १ ॥ तद्विदित्वा साक्षात्कृत्योत्कर्षापकर्षकृतौ हर्षशोकौ विद्वाञ्जहाति । ज्ञेयस्याऽऽत्मतत्त्वस्य निरतिशयत्वेन हर्षशोककारणयोरुत्कर्षापकर्षयोस्तत्रासंभवादित्यर्थः । अन्यत्र धर्मादिति मन्त्रस्यार्थं संगृह्णाति—धर्मादिभ्य इति । आदिशब्देन श्रुत्युक्ताधर्मादिसंग्रहः । धर्माच्छास्त्रीयधर्मानुष्ठानात्परं पृथग्भूतं तथाऽधर्मादविहिताचरणरूपात्पापात्परम् । पुण्यपापसंस्पर्शरहितमित्यर्थः । भूताद्भूतकालावच्छिन्नाद्भव्याद्भविष्यकालावच्छिन्नात्परम् । नित्यं वर्तमानमिति यावत् ॥ २ ॥ ईदृग्विधं यत्तत्त्वं सर्वे वेदाः प्रतिपादयन्ति । सर्वाणि च तपांसि । पदं पदनीयं यद्वस्तु वदन्ति यत्प्राप्त्यर्थानि भवन्तीत्यर्थः । तथा यत्तत्त्वं प्राप्तुमिच्छन्तो गुरुकुलवासादिलक्षणमन्यदपि ब्रह्मचर्यं चरन्ति मुमुक्षवः स तादृशोऽर्थः शिव एव ॥ ३ ॥ एतद्ध्येवाक्षरमित्यादिकम् 'तत्ते पदं

एतदालम्बनं श्रेष्ठमेतदालम्बनं परम् ।
एतदालम्बनं ज्ञात्वा ब्रह्मलोके महीयते ॥ ५ ॥
न जायते म्रियते वा विपश्चि-
न्नायं कुतश्चिन्न बभूव कश्चित् ।
अजो नित्यः शाश्वतोऽयं पुराणो
न हन्यते हन्यमाने शरीरे ॥ ६ ॥

---

संग्रहेण ब्रवीम्योमित्येतत्' इति श्रुतौ यत्प्रणवात्मकमक्षरमाम्नातं तदेवैतच्छब्देन परामृश्यते । एतदेव प्रणवात्मकमक्षरं हिरण्यगर्भादिलक्षणमपरं ब्रह्म । तथैतदेवाक्षरं निरस्तसमस्तोपाधिकं सच्चिदानन्दैकरसं परं ब्रह्म । प्रणवस्य तदुभयप्रतीकत्वात्तादात्म्यव्यपदेशः । अत एतदेवाक्षरमपरं ब्रह्मात्मनोपास्यं विज्ञातव्यं परं ब्रह्म च स्वाधिकारानुरूपेण ज्ञात्वा यो यदिच्छति ज्ञातव्यं परं ब्रह्म प्राप्तव्यमपरं ब्रह्म वा तस्य तद्भवति ॥ ४ ॥ अत एव तत्परापरब्रह्मप्राप्त्युपायत्वाद्ब्रह्मप्राप्त्यालम्बनानां मध्ये श्रेष्ठं प्रशस्ततमम् । अत एतदेवाऽऽलम्बनं परं ब्रह्मविषयत्वात् । अतः परापरब्रह्मात्मनैतत्प्रणवात्मकमालम्बनं ज्ञात्वाऽपरब्रह्मज्ञानादर्चिरादिमार्गेण ब्रह्मलोकं प्राप्यात्र महीयते । तेन तु प्रणवेन परं ब्रह्म जानन् । लोक्यत इति लोको ब्रह्मैव लोको ब्रह्मलोकः । हार्दाकाशमध्यस्थिते लोकनीये परस्मिन्ब्रह्मण्येकीभूतः सन्महीयते ॥ ५ ॥ अथ तेन प्रणवेन ज्ञातव्यं परं ब्रह्म स्वरूपतो निर्दिशति—न जायत इति । जननमरणयोराद्यन्तभावविकारयोरात्मनि प्रतिषेधात्तन्मध्यवर्तिनो विकारा अपि तत्र न सन्तीत्यर्थात्प्रतिपादितं भवति । स च सर्वविक्रियारहित आत्मा विपश्चिन्मेधावी । अपरिलुप्तप्रज्ञास्वाभाव्यात् । किंच नायमात्मा कुतश्चित्कारणान्तरादिद्वैतवदुत्पद्यते तथाविधस्य वस्त्वन्तरस्यैवाभावात् । ननु वियदादिकं वस्तु विद्यत इति तत्राऽऽह—न बभूवेति । तस्मादात्मनः कश्चिदर्थान्तरभूतः पदार्थो न बभूव नोत्पन्नः । 'आत्मन आकाशः संभूतः' इत्याद्या

य एनं वेत्ति हन्तारं यश्चैनं मन्यते हतम् ।
तावुभौ न विजानीतो नायं हन्ति न हन्यते ॥ ७ ॥
अणोरणीयान्महतो महीया-
नात्माऽस्य जन्तोर्निहितो गुहायाम् ।
तमक्रतुः पश्यति वीतशोको
धातुप्रसादान्महिमानमस्य ॥ ८ ॥

---

श्रुतिस्तु मायावशादद्वैतप्रपञ्चस्याद्वितीये ब्रह्मण्यध्यासप्रतिपादनपरा । तस्मात्कारणान्तराभावादयमात्माऽजो जनिरहितः । अत एव नित्यो ध्रुवः । शाश्वतोऽपक्षयवर्जितः । पुराणः पूर्वकालेऽपि नवः । निरवयवत्वेन तदुपचयापचययोरभावात्सर्वदैकरूप एवेत्यर्थः । एवंविध आत्मा स्वाधिष्ठिते शरीरे शस्त्रादिभिर्हन्यमानेऽपि न हन्यते न हिंस्यते ॥ ६ ॥ ननु लोके कश्चित्प्रयतमान आत्माऽन्यस्याऽऽत्मनो हन्ता दृश्यते । अतस्तावात्मानौ हन्तृहन्तव्यरूपेण सर्वजनसंमतावित्यत आह—य एनमिति । एनमुक्तविधमात्मानं हन्तारं यो वेत्त्ययमस्य हन्तेति जानाति यश्चैनमात्मानं हतं हननक्रियाव्याप्तं मन्यते तावुभौ नैव जानीतः । यतो नायमात्मा हन्ति न चासौ हन्यते । निर्विकारस्याऽऽत्मनः क्रियाश्रयत्वतद्विषयत्वयोरसंभवादित्यर्थः ॥ ७ ॥ अणोरणीयानित्यादि । अणोरल्पपरिमाणादद्रव्यादप्यणीयानतिशयेनाणुः । तथा महतो महत्परिमाणादपि महीयान्महत्तरः । अणुर्महद्वा यदस्ति लोके वस्तु तत्सर्वमनेनैव कारणभूतेनाऽऽत्मना लब्धसत्ताकं भवतीति तदुभयव्यापकत्वादात्मनोऽणीयस्त्वादिव्यपदेशः । स आत्माऽस्य जन्तोर्जनिमतो ब्रह्मादिस्तम्बान्तस्य प्राणिजातस्य गुहायां हृदये निहितः । आत्मभावेनावस्थित इत्यर्थः । तं तथाविधमात्मानमक्रतुरकामो दृष्टादृष्टे विषये वितृष्णः पुरुषः पश्यति साक्षात्करोति । धातुप्रसादान्मनआदीनि करणानि शरीरधारणाद्धातव उच्यन्ते तेषां धातूनां प्रसादाद्विषयोपभोगजनितकालुष्यविरहा-

दूरं व्रजति चाऽऽसीनः शयानो याति सर्वतः ।
कस्तं साक्षान्महादेवं मदन्यो ज्ञातुमर्हति ॥ ९ ॥
अशरीरं शरीरेषु ह्यनवस्थेष्ववस्थितम् ।
महान्तं विभुमात्मानं मत्वा धीरो न शोचति ॥ १० ॥
नायमात्मा प्रवचनेन लभ्यो
न मेधया न बहुना श्रुतेन ।
यमेवैष वृणुते तेन लभ्य-
स्तस्यैष आत्मा विवृणुते तनूं स्वाम् ॥ ११ ॥

---

षस्य च प्रत्यगात्मनो महिमानमनवच्छिन्नब्रह्मरूपत्वलक्षणं यदाऽऽपरोक्ष्येण जानाति तदा वीतशोकः संसारबन्धविमुक्तो भवतीत्यर्थः ॥ ८ ॥ दूरं व्रजतीत्यादि । आसीनोऽवस्थितोऽचल एव सन् दूरं व्रजति । तथा शयानः सन्सर्वतो याति गच्छति । सर्वगते प्रत्यगात्मन्यासनव्रजनशयनादीनां परस्परविरुद्धानामध्यस्तत्वाद्युगपत्तत्प्रतिभासो न विरुध्यत इत्यर्थः । स च विरुद्धधर्मयोगः परिच्छिन्नस्य न संभवतीत्यपरिच्छिन्नोऽयमात्मा महादेवः । एतेन श्रुतिगतं मदामदमिति पदमुक्तार्थं भवति । तं महादेवं मत्तोऽन्यः को वा साक्षादयमहमस्मीति ज्ञातुमर्हतीति नाचिकेतसं प्रति मृत्युवाक्यम् ॥ ९ ॥ अशरीरमिति । स्वेन स्वरूपेण शरीररहितमाकाशकल्पम् । अनवस्थेष्ववस्थानरहितेष्वनित्येषु देवपितृमनुष्यादीनां शरीरेष्वात्मभावेनावस्थितं स्वयं नित्यं महान्तम् । आकाशादिवदस्य महत्त्वमापेक्षिकं मा भूदिति विशिनष्टि—विभुमिति । विभुं व्यापिनमपरिच्छिन्नमात्मानं सर्वप्राणिष्वहमिति प्रत्यक्त्वेनोल्लिख्यमानं मत्वा मननेन निश्चित्य पुनः संसारशोकं न प्राप्नोति ॥ १० ॥ नायमात्मेति । अयमात्मा प्रवचनेनानेकवेदाध्ययनेन न लभ्यो लब्धुमशक्यः । नापि मेधया ग्रन्थधारणशक्त्या च । न बहुविधेनानात्मशास्त्रश्रवणेन । केन तर्ह्युपायेनासौ लभ्य इति । उच्यते । यमेव स्वात्मानमेष साधको वृणुते प्रार्थयते तेनैव

नाविरतो दुश्चरितान्नाशान्तो नासमाहितः ।
नाशान्तमनसो वाऽपि प्रज्ञानेनैनमाप्नुयात् ॥ १२ ॥
यस्य ब्रह्म च क्षत्त्रं च उभे भवत ओदनः ।
क इत्थं वेद देवो वा मनुष्योऽन्यश्च यत्र सः ॥ १३ ॥
ऋतं पिबन्तौ सुकृतस्य लोके
गुहां प्रविष्टौ परमे परार्धे ।

---

साधकेनायमात्मा लभ्य उपलब्धव्यः । तस्य च साधकस्यैष आत्मा स्वां तनूं निरस्तसमस्तोपाधिकं स्वकीयं रूपं विवृणुते प्रकाशयति ॥ ११ ॥ नाविरत इति। दुश्चरितात्पापाचरणादविरतोऽनुपरतः। एनमुदीरितमात्मानं न प्राप्नुयात् । नाप्यशान्त इन्द्रियलौल्यादनुपरतः । तथाऽसमाहितश्चि-त्तैकाग्र्यरहितोऽप्येनं प्राप्तुं न शक्नोति । तथाऽशान्तमानसः । अशान्त-मव्यावृत्तं विषयेभ्यो मानसं यस्य सोऽपि । नैनं प्राप्नोति । यस्तु दुश्च-रिताद्विरत इन्द्रियलौल्याच्च शान्तः समाहितचित्त उपशान्तमानसश्च स एवैनमात्मानं गुरुशास्त्रकृतेन प्रज्ञानेन प्रकृष्टेन निर्विचिकित्सापरोक्षज्ञानेन प्राप्नोतीत्यर्थः ॥ १२ ॥ यस्य ब्रह्मेति । यस्याऽऽत्मनो ब्रह्म क्षत्त्रं चोभे अप्योदनोऽशनं भवतः । उपलक्षणमेतत् । ब्रह्मक्षत्त्रा-द्युपलक्षितं सर्वं जगदुपसंह्रियमाणं यद्यस्य परमात्मन इदमोद-नस्थानीयं भवति । सर्वहरो मृत्युश्चोपदंशस्थानीयः । श्रूयते हि—मृत्यु-र्यस्योपसेचनमिति । स च परमात्मा यत्र वर्तते तत्स्वरूपमित्थमेवंप्रका-रविशिष्टमिति देवमनुष्यादीनां मध्ये को नाम जानीयात् ॥ १३ ॥ उक्तमर्थं रथरूपकल्पनया प्राप्तप्राप्तव्यभावेन विशदयितुं जीवेश्वरयोरौपा-धिकं लोकसिद्धं भेदमनुवदति 'ऋतं पिबन्तौ' इति मन्त्रस्तस्याभिप्राय-माविष्कर्तुं तं पठति—ऋतं पिबन्ताविति । सुकृतस्य स्वयंकृतस्य स्वात्मना निर्वर्तितस्य कर्मणः फलभूते लोके लोक्यमानेऽस्मिञ्शरीरे गुहां सत्त्वपरिणामरूपां बुद्धिं प्रविष्टौ । बाह्यभूताकाशापेक्षया हार्दाकाशं

छायातपौ ब्रह्मविदो वदन्ति
शरीरभृच्छंकरसंज्ञितौ तौ ॥ १४ ॥
शरीरभृत्कर्मफलं भुङ्क्ते योजयिता शिवः ।
प्रतीतितो विरुद्धौ तौ भेदस्त्वौपाधिकस्तयोः ॥ १५ ॥
आत्मानं रथिनं विद्याच्छरीरं रथमेव तु ।
बुद्धिं तु सारथिं विद्यान्मनः प्रग्रहमेव च ॥ १६ ॥

---

परमं तच्च परब्रह्मोपलब्ध्यधिकरणत्वात्परार्धमुत्कृष्टं स्थानं तत्र प्रविष्टौ । हार्दाकाशावस्थितबुद्धिसत्त्वान्तर्गतावित्यर्थः । तौ च जीवपरमात्मानावृतं सत्यमवश्यंभावि कर्मफलं पिबन्तौ भुञ्जानौ । तत्र जीव एव कर्मफल-भोक्ता न तु परमात्मा 'अनश्नन्नन्यो अभिचाकशीति' इति श्रुतेः । अतोऽत्र छत्रिन्यायेन पिबदपिबत्समुदाये पिबच्छब्दप्रयोगः । तौ च छायातपवत्परस्परविलक्षणौ संसारित्वासंसारित्वभेदेन ब्रह्मविदः प्रतिपादयन्ति । ये च पञ्चाग्नयः पञ्चाग्निविद्यायुक्ताः । त्रिवारं नाचिके-तोऽग्निश्चितो यैस्ते त्रिणाचिकेताः । एतेऽप्येवमेवाऽऽत्मानौ प्रतिपादयन्ति । अस्य च मन्त्रस्य जीवपरमात्मपरत्वं भगवता व्यासेनापि सूत्रितम्— 'गुहां प्रविष्टावात्मानौ हि तद्दर्शनात्' इति ॥ १४ ॥ न चानयोर्भेदो वास्तव इत्युक्तार्थपरत्वं मन्त्रस्य दर्शयति— शरीरभृदिति । तयो-र्जीवेश्वरयोर्भेदस्त्वौपाधिकः । तदुपाध्योर्मायाविद्ययोर्भेद एवापरिच्छिन्ने ब्रह्मण्युदशरावस्थभेदश्चन्द्रबिम्ब इव प्रतीयते । अतः प्रातीतिक एवानयो-र्भेदो न वास्तव इत्यर्थः ॥ १५ ॥ तत्राविद्योपाधिकृतो यो जीवस्तस्या-विद्यया संसारगमनं विद्यया मोक्षगमनं चोभयं रथरूपकल्पनया प्रतिपादयति—आत्मानमिति । कर्मफलोपभोक्तारं संसारिणमात्मानं रथिनं रथस्वामिनं जानीयात् । तदधिष्ठितं शरीरं रथं जानीयात् । तद्धि रथोऽश्वैरिन्द्रियैराकृष्यते । व्यवसायलक्षणान्तःकरणपरिणामरूपां बुद्धिं सारथिं विद्यात् । बुद्धया हीन्द्रियादिकं प्रेर्यते । संकल्पादिलक्षणं मनस्त-

इन्द्रियाणि हयान्विद्याद्विषयानपि गोचरान् ।
आत्मेन्द्रियमनोयुक्तं विद्याद्भोक्तारमास्तिकाः ॥ १७ ॥
यस्त्वविज्ञानवान्मर्त्योऽयुक्तेन मनसा सदा ।
तस्येन्द्रियाण्यवश्यानि दुष्टाश्वा इव सारथेः ॥ १८ ॥
यस्तु विज्ञानवान्मर्त्यो युक्तेन मनसा सदा ।
तस्येन्द्रियाणि वश्यानि सदश्वा इव सारथेः ॥ १९ ॥
यस्त्वविज्ञानवान्मर्त्यो ह्यमनस्कः सदाऽशुचिः ।
न स तत्पदमाप्नोति संसारं चाधिगच्छति ॥ २० ॥

---

त्प्रग्रहं रशनां जानीयात् ॥ १६ ॥ चक्षुरादीन्द्रियाण्यश्वाः । रूपादिविषयास्तत्संचरणप्रदेशाः । एवं शरीरादीनां रथादिरूपत्वमात्मनस्तत्स्वामित्वं च कल्पितम् । तत्र शरीरादिविशिष्टस्यैवाऽऽत्मनो भोक्तृत्वं न चिन्मात्ररूपस्येति दर्शयति— आत्मेन्द्रियेति । आत्मशब्दः शरीरवाची । देहेन्द्रियमनोभिः संयुक्तमेवाऽऽत्मनं भोक्तारं जानीयात् । तद्रहितश्चिन्मात्रस्वरूपस्त्वभोक्ता 'ध्यायतीव लेलायतीव' 'अनश्नन्न्यो अभिचाकशीति' इति श्रुतेः ॥ १७ ॥ उक्तां रथक्लप्तिमुपजीव्याविवेकिन इन्द्रियपारवश्यं विवेकिनः स्वाधीनेन्द्रियत्वं च प्रतिपादयति— यस्त्विति । यस्तु मर्त्यः संसार्यात्माविज्ञानवान्कार्याकार्यविवेकज्ञानरहितो भवति । तथाऽयुक्तेनाप्रतिगृहीतेनासमाहितेन मनसा युक्तो भवति । तस्याज्ञानिनश्चक्षुःश्रोत्रादीन्द्रियाणि दुष्टाश्ववदवश्यानि वशीकर्तुमशक्यानि । दुर्निवारणीयानीति यावत् ॥ १८ ॥ यस्तु पुनरुक्तवैपरीत्येन विवेकज्ञानवान्युक्तेन समाहितेन मनसा च युक्तो भवति तस्य विवेकिन इन्द्रियाणि स्ववशानि दान्ताश्ववत्प्रवर्तयितुं निवर्तयितुं च शक्यानीत्यर्थः ॥ १९ ॥ एतौ चोभौ क्रमेण संसारमोक्षयोरधिकारिणावित्याह— यस्त्विति । यस्त्वविज्ञानवान्प्रागुक्तः । अगृहीतमनस्कश्च । अत एवाशुचिरशुद्धः कामवशीकृतत्वेनाकार्येऽपि प्रवर्तनात्सोऽज्ञस्तत्प्रागुक्तं पदं पदनीयमक्षराख्यं प्रणवप्रतीकं परं ब्रह्म न प्राप्नोति । न

यस्तु विज्ञानवान्मर्त्यः समनस्कः सदा शुचिः ।
स तु तत्पदमाप्नोति यस्माद्भूयो न जायते ॥ २१ ॥
विज्ञानसारथिर्यस्तु मनःप्रग्रहवान्नरः ।
सोऽध्वनः पारमाप्नोति तद्विष्णोः परमं पदम् ॥ २२ ॥
पदं यत्परमं विष्णोस्तदेवाखिलदेहिनाम् ।
पदं परममद्वैतं स शिवः साम्बविग्रहः ॥ २३ ॥
रुद्रविष्णुप्रजेशानामन्येषामपि देहिनाम् ।
ऋते साम्बं महादेवं किं भवेत्परमं पदम् ॥ २४ ॥

---

केवलं तदप्राप्तिमात्रं प्रत्युतानर्थं जन्ममरणादिलक्षणं संसारं प्राप्नोति ॥ २० ॥ यस्तु तद्विपरीतो विवेकविज्ञानवान्समाहितमनस्कोऽत एव सदा सर्वदा शुचिः शुद्धश्च भवति । स तु तत्प्रागुक्तं पदनीयं ब्रह्म प्राप्नोति । तत्पदनीयं विशिनष्टि—यस्मादिति । यस्मादाप्तात्पदादच्युतः सन् भूयः पुनर्न जायते संसारमण्डलं न प्रविशति तादृशमपुनरावृत्तिलक्षणं ब्रह्मस्वरूपं प्राप्नोतीत्यर्थः ॥ २१ ॥ पुनस्तत्पदं विशिनष्टि—विज्ञानेति । निश्चयरूपात्मानात्मविवेकबुद्धिर्विज्ञानम् । संकल्पविकल्पात्मकं मनः । तथा च विज्ञानरूपसारथिना नीयमानः प्रगृहीतमनस्कश्च सन्स विद्वानध्वनः संसारगतेः पारमन्तं प्राप्नोति । स्वस्वरूपयाथात्म्यज्ञानेन संसारबन्धाद्विमुच्यते । तच्च पारं विष्णोर्व्यापनशीलस्य ब्रह्मणः परमं प्रकृष्टं पदं पदनीयं प्राप्तव्यं सच्चिदानन्दैकरसं स्वरूपमिति यावत् ॥ २२ ॥ तद्विष्णोः परमं पदमिति श्रुतिवाक्यं स्वयं व्याकरोति—पदं यदिति । 'यत्र नान्यत्पश्यति नान्यच्छृणोति' इत्येवं त्रिपुटीहीनं यदद्वितीयं तत्त्वं तदेवाखिलदेहिनां देवमनुष्यादीनां सर्वेषां परमं पदं निरतिशयानन्दरूपतया सर्वैरभिलषितत्वादीदृग्विधं परमं पदमेव लीलयाऽर्धनारीश्वरविग्रहः शिवः संपन्नः ॥ २३ ॥ एतदेव सच्चिदानन्दैकरसं परशिवस्वरूपं रुद्रविष्ण्वादीनां गुणमूर्तीनामन्येषामिन्द्रादीनां च परमं पदं भवतीत्यर्थः

इन्द्रियेभ्यः परा ह्यर्था अर्थेभ्यश्च परं मनः ।
मनसस्तु परा बुद्धिर्बुद्धेरात्मा महान्परः ॥ २५ ॥
महतः परमव्यक्तमव्यक्तात्पुरुषः परः ।
पुरुषान्न परं किंचित्सा काष्ठा सा परा गतिः ॥ २६ ॥

---

॥ २४ ॥ इन्द्रियादीनामुत्तरोत्तरं सूक्ष्मत्वव्यापकत्वप्रत्यक्त्वतारतम्यक्रमेण पदनीयस्य पराशिवस्वरूपस्य निरतिशयं सूक्ष्मत्वादिकं प्रतिपादयति— इन्द्रियेभ्य इत्यादिना । भूतकार्याणि तावदिन्द्रियाणि स्थूलानि च यैरर्थैः शब्दादिविषयैः स्वात्मप्रकाशनायाऽऽरब्धानि तेऽर्था इन्द्रियेभ्यः स्वकार्येभ्यः पराः सूक्ष्मा महान्तश्च । तेभ्योऽप्यर्थेभ्यश्च मनःशब्दवाच्यं मनस आरम्भकं भूतसूक्ष्मं परम् । तस्मान्मनसोऽपि परा सूक्ष्मतरा महत्तरा प्रत्यगात्मभूता च बुद्धिः । अध्यवसायाद्यारम्भकं भूतसूक्ष्मं बुद्धिशब्दवाच्यम् । तस्या अपि बुद्धेर्महानात्मा परः । तत्समष्टिरूपा हैरण्यगर्भी बुद्धिर्महानात्मेत्युच्यते । सा सर्वासां बुद्धीनां कारणत्वात्सूक्ष्मतरा व्यापिनी प्रत्यग्भूता च । तस्मादपि महतः परं सूक्ष्मतरं प्रत्यग्भूतं सर्वमहत्तरं चाव्यक्तमव्याकृतं नामरूपात्मकं सर्वस्य जगतो बीजभूतं मायाप्रकृत्याद्यपरपर्यायं तत्त्वम् । तस्मादप्यव्यक्तात्परः सूक्ष्मतरः सर्वकारणभूतः प्रत्यगात्मा । अत एव पुरुषः सर्वस्य कार्यप्रपञ्चस्य स्वस्वरूपेण पूरयिता । यद्वा सर्वासु पूर्षु शेत इति पुरुषः । सर्वान्तरत्वात् । ततोऽन्यस्य सूक्ष्मस्य प्रसङ्गं निवारयन्नाह—पुरुषादिति । पुरुषात्सर्वान्तरात्चिद्घनस्वरूपात् प्रत्यगात्मनः परं किंचिदपि वस्तु नास्त्येव । सूक्ष्मत्वमहत्त्वप्रत्यगात्मत्वानां तत्रैव परिसमापनात् । सैव परा काष्ठा पर्यवसानभूमिः । सैव गन्तॄणां संसारिणां परा प्रकृष्टा गतिर्गन्तव्यं प्राप्तव्यं वस्तु । अन्यास्तु गतयः पुनरावृत्तिमत्त्वादपराः । उक्तविधा तु गतिः पुनरावृत्तिराहित्येन परा । अत एव भगवतोक्तम्—'यद्गत्वा न निवर्तन्ते तद्धाम परमं मम' इति । एषा च प्रत्यगात्मत्वेन प्राप्तप्राप्ति-

पुरुषो नाम संपूर्णः शिवः सत्यादिलक्षणः ।
साम्बमूर्तिधरो नान्यो रुद्रो विष्णुरजोऽपि वा ॥ २७ ॥
एष सर्वेषु भूतेषु गूढात्मा न प्रकाशते ।
दृश्यते त्वग्र्यया बुद्ध्या सूक्ष्मया सूक्ष्मदर्शिभिः ॥ २८ ॥
यच्छेद्वाङ्मनसि प्राज्ञस्तद्यच्छेज्ज्ञान आत्मनि ।
महत्यात्मनि विज्ञानं तद्यच्छेच्छान्त आत्मनि ॥ २९ ॥

---

रूपत्वाज्ज्ञानमात्रप्राप्या । अतो गत्यन्तरवत् क्रियासाध्यत्वादनित्यत्वमस्य न शङ्कनीयमित्यर्थः ॥ २५ ॥ २६ ॥ श्रुतिगतं पुरुषपदं स्वयं व्याकरोति—पुरुषो नामेति । त्रिविधपरिच्छेदरहितः सत्यज्ञानादिलक्षणः परशिव एव साक्षात्पुरुषशब्दाभिधेयः । स एव लीलया स्वस्य शिवशक्तिरूपतामाविष्कर्तुमर्धनारीश्वरविग्रहो भवति । गुणमूर्तयो रुद्रादयोऽपि न ततः पृथग्भूता इत्यर्थः ॥ २७ ॥ एष सर्वेष्विति । एष उदीरितरूपः पुरुषः सर्वेषु ब्रह्मादिस्तम्बान्तेषु भूतेष्वावरणाविद्यया गूढः संछन्नः । आत्मत्वेनावस्थितोऽपि मोहवशाद्देहेन्द्रियादिविविक्ततया न प्रकाशते । एवमपि सूक्ष्मदर्शिभिरिन्द्रियेभ्यः परा ह्यर्था इत्युक्तप्रकारेण निरतिशयसूक्ष्मात्मतत्त्वं द्रष्टुं शक्तैर्विद्वद्भिर्गुरुशास्त्रसंस्कृतया प्रातैकाग्रतयाऽत एव सूक्ष्मया बुद्ध्या स पुरुषो दृश्यते द्रष्टुं शक्यते ॥ २८ ॥ तद्दर्शनोपायमाह—यच्छेदिति । प्राज्ञो विवेकवान्वाक्शब्दोपलक्षितं कृत्स्नं बाह्यविषयमिन्द्रियजातं मनसि यच्छेन्नियच्छेदुपसंहरेत् । अत्र मनसीति सप्तम्यन्तं पठता यच्छेद्वाङ्मनसीति श्रुतिपाठगतं दैर्घ्यं छान्दसमिति व्याख्यातं भवति । उपसंहृतबाह्यकरणं तच्च मनो ज्ञाने प्रकाशस्वरूपे बुद्ध्याख्य आत्मन्युपसंहरेत् । निश्चयज्ञानरूपं तं च बुद्ध्यात्मानं महत्यात्मनि तत्समष्टिभूते सूक्ष्मतरे हिरण्यगर्भोपाधौ नियच्छेत् । तच्च महदात्माभिधं हैरण्यगर्भं बुद्धिसत्त्वं शान्ते प्रत्यस्तमिताशेषविशेषरूपे निर्विकारे सर्वान्तरे साक्षिचिन्मात्ररूपे मुख्य आत्मनि नियच्छेत् । एवमिन्द्रियादिकं

अशब्दमस्पर्शमरूपमव्ययं
तथाऽरसं नित्यमगन्धवच्च यत् ।
अनाद्यनन्तं महतः परं ध्रुवं
निचाय्य तं मृत्युमुखात्प्रमुच्यते ॥ ३० ॥
पराञ्चि खानि व्यतृणन्महेश-
स्तस्मात्पराङ्पश्यति नाऽऽत्मरूपम् ।
कश्चिद्धीरः प्रत्यगात्मानमैक्ष-
दावृत्तचक्षुरमृतत्वमिच्छन् ॥ ३१ ॥

---

कारणपर्यन्तं विलाप्य परिपूर्णस्वप्रकाशचिदात्मानुसंधानपरो भवेदित्यर्थः ॥२९॥ पृथिव्यादीनां भूतानामुत्तरोत्तरमेकैकगुणन्यूनत्वात्सूक्ष्मतातारतम्यं दृष्टं किमु वक्तव्यं शब्दादिसर्वगुणरहितस्य निरतिशयं सूक्ष्मत्वमित्य-भिप्रेत्य तन्निषेधेन तत्स्वरूपमुपलक्षयति—अशब्दमिति । अशब्दमित्या-द्युक्तार्थम् । अव्ययमिति । यद्धि शब्दादिमद्भवति तत्खलु व्ययधर्मवत् इदं तु परशिवस्वरूपं शब्दादिरहितत्वान्न व्येति न हीयत इत्यव्ययमन-श्वरम् । अरसमित्याप्यगुणस्य रसस्य व्युदासः । अव्ययत्वादेव नित्यं यदीदृग्विधं तत्त्वम् । अनादीति । आदिः कारणं तद्रहितम् । अन्तः कार्यं तद्रहितम् । सकारणत्वं कार्यात्मना परिणामश्चानित्यत्वकारणमिति तदुभयमनेन व्यावर्त्यते । महतो महत्त्वाद्बुद्ध्याख्यात्परं विलक्षणं नित्यविज्ञानाप्तिस्वरूपमिति यावत् । ध्रुवं कूटस्थं नित्यं निर्विकारम् । तमीदृग्विधं ब्रह्मात्मानं निचाय्य निश्चित्य मृत्युमुखान्मृत्युगोचरादवि-द्याकामकर्मलक्षणात्संसारान्मुच्यते ॥ ३० ॥ ननूक्तविध आत्मा कस्मा-त्सर्वैर्न दृश्यत इति तत्र कारणमाह—पराञ्चीति । महेशो जगत्स्रष्टा परमेश्वरः खानि खमाकाशं तदुपलक्षितानि श्रोत्रादीनी-न्द्रियाणि । पराञ्चि परागञ्चनस्वभावानि बाह्यशब्दादिविषयप्रकाशनाय प्रवर्तमानानि बहिर्मुखानि सृष्ट्वा तानि व्यतृणद्धिंसितवान् । 'तृ हिंसि-

पराचः कामाननुयन्ति बाला
मृत्योः पाशं तेऽपियन्ति स्वमोहात् ।
अथ धीरा अमृतत्वं विदित्वा
ध्रुवं तत्त्वं यान्ति कामैरसक्ताः ॥ ३२ ॥
येन रूपान्रसान्गन्धाञ्शब्दान्स्पर्शांश्च मैथुनान् ।
एतेनैव विजानाति किमत्र परिशिष्यते ॥ ३३ ॥

---

सानादरयोः' इति धातुः । यस्मादेवं तस्मात्तैरिन्द्रियैः पुरुषःपराङ्पश्यति बाह्याञ्शब्दस्पर्शादिविषयानेवोपलभते नाऽऽत्मस्वरूपं जानाति । एवमपि कश्चित्पुनर्धीरो धीमानमृतत्वं मोक्षमिच्छन्नावृत्तचक्षुर्बाह्यविषयदर्शनसाधनं चक्षुःश्रोत्रादिकमिन्द्रियमावृत्तं स्वस्वविषयेभ्यो व्यावर्तितं येन तथाविधो भूत्वा प्रत्यगात्मानमुदीरितलक्षणमसंसार्यात्मतत्त्वमैक्षत्पश्यति । 'छन्दसि लुङ्लङ्लिटः' इति वर्तमाने लङ् ॥ ३१ ॥ पराच इति । बाला अज्ञजना मनुष्याः कामान्काम्यमानाञ्शब्दादिबाह्यविषयाननुयन्त्यनुसरन्ति । ते कामिनो मृत्योरविद्याकामकर्मसमुदायस्य प्रसारितं पाशजालमपियन्त्यपिगच्छन्ति । तत्र कारणमाह—स्वेति । स्वस्याऽऽत्मनो मोहो यदावरणमज्ञानं तद्वशादित्यर्थः । अथेत्युक्तवैपरीत्ये । धीरा विवेकिनो जनाः प्रत्यगात्मस्वरूपावस्थानलक्षणममृतत्वं विदित्वा साक्षात्कृत्य तैः कामैरसक्ता असंबद्धाः सन्तो ध्रुवं कूटस्थं नित्यं परमार्थभूतं ब्रह्मात्मानं यान्ति प्राप्नुवन्ति ॥ ३२ ॥ तदधिगमोपायमाह—येनेति । येन विज्ञानेन बाह्यान् रूपादिविषयान्मैथुनान्मिथुनसंबन्धान्सुखविशेषांश्च विजानाति विस्पष्टं जानाति । एतेनैव देहादिसंघातविलक्षणेन चिन्मात्रप्रकाशेनाऽऽत्मना तान्विजानाति । यो रूपादिसकलप्रत्ययसाक्षी स एवाऽऽत्मा न तु देहेन्द्रियादिसंघातस्तस्य रूपादिमत्त्वेन घटादिवदनात्मत्वादिति भावः । अत्रास्मिँल्लोके विज्ञेयं किं परिशिष्यते । सर्वमेव तु चिन्मात्ररूपेणाऽऽत्मना विज्ञेयमेव भवति न किंचित्परिशिष्यत इत्यर्थः ॥ ३३ ॥ तस्य साक्ष्यात्मनः

जाग्रत्स्वप्नसुषुप्त्याख्यं पुरं येनानुपश्यति ।
माहान्तं परमात्मानं मत्वा धीरो न शोचति ॥ ३४ ॥
जाग्रदादित्रयं यस्तु विजानाति चिदात्मना ।
ततो भेदेन नैवास्ति पुरत्रयमिदं सदा ॥ ३५ ॥
चैतन्यमात्रो भगवाञ्शिव एव स्वयंप्रभः ।
पुरत्रयात्मना भाति न भाति च महाप्रभुः ॥ ३६ ॥
इहामुत्र स्थितं तत्त्वं सदेकं न ततोऽपरम् ।
मृत्योः स मृत्युमाप्नोति योऽन्यं देवं प्रपश्यति ॥ ३७ ॥

---

स्वरूपं विशेषेण प्रतिपादयति—जाग्रदिति । जाग्रदादिस्थानत्रयं येन चिन्मात्ररूपेणाऽऽत्मनाऽनुगतेन पश्यति जानाति । महान्तमित्याद्युक्तार्थम् । एतेन स्वप्नान्तं जागरितान्तं चोभौ येनानुपश्यतीति श्रुतिरवस्थात्रयोपलक्षणार्था व्याख्याता ॥ ३४ ॥ अथ तस्याः श्रुतेस्तात्पर्यमाह—जाग्रदादीति । चिदात्मना भास्यं जाग्रदादिस्थानत्रयमितरद्द्वयवच्चिद्रूपे तस्मिन्नध्यस्तत्वात्ततो भेदेन नैव विद्यते ॥ ३५ ॥ पुरत्रयाधिष्ठानं यच्चैतन्यमात्रं स एव स्वयंप्रकाशमानः परशिवः परिच्छेदप्रतीतेरौपाधिकत्वादतो महाप्रभुः स्वतन्त्रः परशिव एव स्वमायाविलासेन कदाचित्पुरत्रयात्मना भाति । तत्त्वदृष्ट्या तु तदात्मना नैव भाति । किंतु निरस्तसमस्तोपाधिकः स्वयमेव प्रकाशते ॥ ३३ ॥ यदाम्नायते—'यदेवेह तदमुत्र यदमुत्र तदन्विह' इति तदभिप्रायमाह—इहामुत्रेति । इहास्मिन्कार्यकारणसंघाते यदवस्थितं सच्चिदानन्दैकरसं तत्त्वं यच्चामुत्र जगत्कारणे सर्वज्ञे सूर्यात्मके ब्रह्मण्यवस्थितं तदुभयं सर्वदैकं न तयोर्भेदो विद्यते, किंचिज्ज्ञत्वसर्वज्ञत्वादिभेदप्रतिभासस्य मायाऽविद्योपाधिकृतत्वादित्यर्थः । अत एवैतरेयकतैत्तिरीयकयोः समाम्नातम्—'तद्योऽहं सोऽसौ योऽसौ सोऽहम्' इति । 'स यश्चायं पुरुषे यश्चासावादित्ये स एकः' इति च । विपक्षे बाधकमाह—मृत्योरिति । यस्तु स्वात्मनः सकाशादेवं

अग्निर्यथैको भुवनं प्रविष्टो रूपं रूपं प्रतिरूपो बभूव ।
एकस्तथा सर्वभूतान्तरात्मा रूपं रूपं प्रतिरूपो बहिश्च ॥ ३८ ॥
वायुर्यथैको भुवनं प्रविष्टो रूपं रूपं प्रतिरूपो बभूव ।
एकस्तथा सर्वभूतान्तरात्मा रूपं रूपं प्रतिरूपो बहिश्च ॥ ३९ ॥
सूर्यो यथा सर्वलोकस्य चक्षुर्न लिप्यते चाक्षुषैर्बाह्यदोषैः ।
एकस्तथा सर्वभूतान्तरात्मा न लिप्यते लोकदुःखेन बाह्यः ॥ ४० ॥

---

द्योतमानं परशिवमन्यं पश्यति स मृत्योर्मरणात्पुनर्मृत्युं प्राप्नोति । जन्ममरणप्रवाहपतितो भवतीत्यर्थः ॥ ३७ ॥ ननु परस्माद्ब्रह्मणः सर्वस्य जगतो भेदोऽनुभूयत एवेत्याशङ्क्य दृष्टान्तैस्तत्तादात्म्यं प्रतिपादयति—अग्निर्यथेत्यादिना । यथा खल्वयमग्निः स्वयमेक एव भवत्यस्मिन्भूतजातानीति भुवनमयं लोकस्तं प्रविष्टः सन् रूपं रूपं काष्ठादिकं सर्वं दाह्यभेदं प्राप्य तत्तत्प्रतिरूपो बभूव । दाह्यसमानाकृतिर्भवतीत्यर्थः । तथैक एव सच्चिदानन्दरूपः परशिवः सर्वभूतान्तरात्मा सर्वेषां भूतानामन्तरात्मा भूत्वा तत्तदेव मनुष्यादिशरीरं प्रविश्य तत्तत्प्रतिरूपो बभूव । तथा प्रपञ्चाद्बहिरपि स्वेन निरुपाधिकेनाविकृतरूपेणावतिष्ठते । वायुर्यथैक इत्यत्राप्येवं योज्यम् ॥ ३८ ॥ ३९ ॥ एवमेकस्यैवाऽऽत्मनस्तत्र तत्र प्रतिरूपत्वावस्थानेन तत्कृतसंसारदुःखानुभवोऽपि स्यादित्याशङ्क्य सदृष्टान्तं निर्लेपतामाह—सूर्यो यथेति । यथा सूर्यः सर्वलोकस्य चक्षुरालोकेन चक्षुरिन्द्रियस्योपकारं कुर्वंश्चक्षुर्भूतोऽप्यशुच्यादिदर्शनजनितैश्चाक्षुषैराध्यात्मिकैर्बाह्यैः पापदोषैश्च न लिप्यते न स्पृश्यते तथैक एव शिवः सर्वभूतान्तरात्मा सन्नपि बाह्यस्तस्मात्सर्वस्माद्भूतजाताद्विविक्तः संस्तदीयदुःखेन न लिप्यते । अविद्यया ह्यात्मनः संसारप्रतीतिर्न च सा परमार्थोपाधौ विद्यत इत्यसता संसारदुःखेन कथं परमार्थभूतस्याऽऽत्मनो लेपसंभव इत्यर्थः ॥ ४० ॥ एको वशीति । एकः सर्वमुख्यः । न चानेन सदृशोऽधिको वा कश्चिदस्ति । वशी स्वतन्त्रः । यतः सर्वं जगदस्य वशे

एको वशी सर्वभूतान्तरात्मा
एकं रूपं बहुधा यः करोति ।
तमात्मस्थं येऽनुपश्यन्ति धीरा-
स्तेषां सुखं शाश्वतं नेतरेषाम् ॥ ४१ ॥
येनैव नित्याश्च सचेतनाश्च
यस्मिन्विभक्ताः प्रविभान्ति मोहात् ।
तमात्मस्थं येऽनुपश्यन्ति धीरा-
स्तेषां शान्तिः शाश्वती नेतरेषाम् ॥ ४२ ॥
तदेतदिति मन्यन्तेऽनिर्देश्यं परमं सुखम् ।
कथं नु तद्विजानीयात्किमु भाति विभाति वा ॥ ४३ ॥

---

वर्तते । तदपि कुत इत्यत आह—सर्वेति । सर्वान्तरात्मत्वमपि कुत इति तदाह—एकमिति । एकमेकरसं विशुद्धविज्ञानलक्षणमात्मीयं रूपं बहुधा बहुप्रकारं विचित्रोपाधिभेदवशेन यः करोति तमात्मस्थमात्मनि शरीरे हार्दाकाशमध्ये स्थितमभिव्यक्तं गुरुशास्त्रोपदेशेन येऽनुपश्यन्ति साक्षादनुभवन्ति धीरा विवेकिनस्तेषां विदुषां ब्रह्मीभूतानामेव सुखं शाश्वतं नित्यनिरतिशयाभिव्यक्तिर्भवति । इतरेषामज्ञानिनां तु यच्छब्दस्पर्शादिविषयभोगसुखं तच्छाश्वतं न भवति । शुभकर्मोपस्थापितबुद्धिवृत्त्यनुविधायित्वेन तस्य क्षणिकत्वादित्यर्थः ॥ ४१ ॥ 'नित्यो नित्यानां चेतनश्चेतनानाम्' इति श्रुतेरर्थमाह—येनैवेति । व्यावहारिकानित्याकाशादयो येन यत्सत्तानुवेधबलेन नित्याः । तथा यच्चैतन्यानुवेधबलेन देवमनुष्यादयः सचेतनाः । ते च यस्मिन्स्वप्रकाशे ब्रह्मण्यध्यस्ततया विभक्ताः सन्तो मोहादज्ञानवशाद्विभान्ति विचित्रनामरूपात्मना विविधं भासन्ते । तमात्मस्थमित्यादि पूर्ववत् । शान्तिः सर्वविषयेभ्य उपरतिः ॥ ४२ ॥ तदेतदित्यादि । यदात्मस्वरूपभूतं सुखमनिर्देश्यं निर्देष्टुमशक्यमवाङ्मनसगोचरं परमं निरतिशयं तदेतदित्यापरोक्ष्येण ब्रह्मनिष्ठा मन्यन्तेऽनुभवन्ति तदात्मसुख-

आदित्यचन्द्रानलतारकाद्या
न भान्ति यस्मिन्ननिशं महान्तः ।
प्रकाशमानं तमनुप्रभान्ति
प्रभानमस्यैव हि नेतरेषाम् ॥ ४४ ॥
ऊर्ध्वमूलस्त्ववाक्शाख एषोऽश्वत्थः सनातनः ।
तदेव शुक्रं तद्ब्रह्म तदेवामृतमुच्यते ॥ ४५ ॥
तस्मिँल्लोकाः श्रिताः सर्वे तदु नात्येति कश्चन ।
एतद्वै तत्सुरश्रेष्ठाः सम्यगेव मयोदितम् ॥ ४६ ॥

---

मिदानींतनोऽपि कथं नु केन खलु प्रकारेण विस्पष्टं जानीयात् । तत्किं भाति दीप्यते भासमानं हि तदस्य विस्पष्टं भाति किंवा न भातीति बहिर्देव कोऽप्यन्तरम् ॥ ४३ ॥ भाति च विभाति चेत्यस्योत्तरं विवक्षन् तत्र सूर्यो भातीति श्रुतेरर्थमाह—आदित्येति । तमनुप्रभान्तीति । चैतन्यज्योतिषि तस्मिन्नध्यस्तत्वात्तत्स्फुरणमनुसृत्यैव सूर्यादयः प्रदीप्यन्ते । अतः स्वाभाविकं भानमात्मज्योतिष एव नान्येषां भौतिकानां तेजसाम् । अतः स्वप्रकाशचिदेकरसं तत्स्वरूपभूतं निरतिशयसुखं स्वयमेव भाति च विभाति चेत्यर्थः ॥ ४४ ॥ दृश्यमानस्य कार्यप्रपञ्चस्य मूलकारणमन्तरेणानुपपत्तेस्तदस्तित्वं प्रतिपादयति—ऊर्ध्वमूल इति । ऊर्ध्वं संसारमण्डलस्योपर्यवस्थितं तद्विष्णोः परमं पदमिति प्रागुपन्यस्तं निरस्तसमस्तोपाधिकं ब्रह्म मूलं कारणं यस्य स तथोक्तः । अव्यक्तादिस्थावरान्तः संसारवृक्षः। स च स्वर्गनरकतिर्यक्स्रोतोभिः शाखाभिरर्वाचीनशाखः । स च सनातनोऽनादिः । अस्थिरत्वाच्छ्वो न तिष्ठतीत्यश्वत्थः । अस्य च संसारवृक्षस्य यन्मूलं कारणं तदेव शुक्रं शुद्धं सांसारिकदोषासंस्पृष्टं तदेव ब्रह्मामृतमविनाशिस्वभावं कथ्यते । तत्कार्यभूतसंसारवृक्षो वाचारम्भणमात्रत्वाद्गन्धर्वनगरादिवन्मिथ्याभूत इत्यर्थः ॥ ४५ ॥ तस्मिन्नित्यादि । तस्मिन्परमार्थसत्ये ब्रह्मणि मायाविलासवशेन सर्वे लोकाः श्रिता आश्रिताः

इदं सर्वं जगत्साक्षाच्छिवः कम्पयते ध्रुवम् ।
महद्भयमिदं वज्रं विदित्वा मुच्यते नरः ॥ ४७ ॥
तपत्यस्य भयादग्निर्भयात्तपति भास्करः ।
भयादिन्द्रश्च वायुश्च मृत्युर्धावति पञ्चमः ॥ ४८ ॥
वर्तमाने शरीरेऽस्मिन्न शक्तो बोद्धुमीश्वरम् ।
नरः सर्वेषु लोकेषु शरीरित्वाय कल्पते ॥ ४९ ॥
यथाऽऽदर्शे स्वकं रूपं यथावन्निर्मले नरः ।
तथा पश्यति देहेऽस्मिन्नात्मानं ब्रह्म केवलम् ॥ ५० ॥

---

परमार्थवत्प्रतीयन्त इत्यर्थः। अतः समस्तजगदुत्पत्तिस्थितिलयकारणं तद्ब्रह्म कश्चिदपि विकारो नात्येति नातिवर्तते । एतदेव खलु तद्वस्तु यद्विज्ञानादमृतत्वप्राप्तिर्वर्ण्यते ॥ ४६ ॥ 'यदिदं किंच' इति श्रुतेस्तात्पर्यमाह—इदं सर्वमिति । इदं पराग्भूतं सर्वं जगत्कारणभूतः परशिवः कम्पयते । तत्प्रशासनभयात्स्वस्वव्यापारेषु प्रवर्तमानं जगत्प्रेरयतीत्यर्थः । भयमुद्यतमुद्धृतं वज्रमिव महाभयहेतुः । ध्रुवं कूटस्थं नित्यं तमात्मानं विदित्वा संसारबन्धान्मुच्यत इत्यर्थः ॥ ४७ ॥ उक्तं भयहेतुत्वं विवृणोति—तपत्यस्येति । अग्न्यादिलोकपाला अपि तद्भयात्स्वस्वव्यापारे प्रवर्तन्ते किमु वक्तव्यमन्येषां भयहेतुरिति भावः ॥ ४८ ॥ 'इह चेदशकत्' इति श्रुतिं व्याचष्टे—वर्तमान इति । विद्याधिकारयोग्येऽस्मिञ्शरीरे विद्यमान एव प्रत्यगात्मनोऽनवच्छिन्नपरशिवस्वरूपं यो बोद्धुं न शक्तः स सर्वेषु लोकेषु पुण्यपापवशेन शरीरधारणाय कल्पत इत्यर्थः ॥ ४९ ॥ 'यथाऽऽदर्शे' इति श्रुतिं संगृह्णाति—यथेति । यथा निर्मल आदर्शे स्वकीयं रूपं सम्यक्पश्यति तथाऽस्मिन्मानुषशरीरे श्रवणमननादिसाधनकलापानुष्ठानेनाऽऽत्मानं ब्रह्मरूपत्वेन साक्षात्कर्तुं शक्नोति । अन्यत्र तु साधनानुष्ठानासंभवात्तज्ज्ञानं न सुलभमिति भावः ॥ ५० ॥ 'इन्द्रियाणां पृथग्भावम्' इति यदाम्नातं तदभिप्रायमाह—जन्मनाशेति । विदित्वाऽनात्मरूपत

जन्मनाशवतां स्वानां पृथग्भावं परात्मनः ।
तेषां जन्मविनाशौ च विदित्वाऽनात्मरूपतः ॥ ५१ ॥
पश्चादनात्मरूपेण विदितं केवलात्मना ।
विदित्वा स्वानुभूत्यैव स धीरस्तु न शोचति ॥ ५२ ॥
इन्द्रियेभ्यो मनः श्रेष्ठं मनसः सत्त्वमुत्तमम् ।
सत्त्वादपि महानात्मा महतोऽव्यक्तमुत्तमम् ॥ ५३ ॥
अव्यक्तात्तु परः साक्षाद्व्यापकोऽलिङ्ग एव च ।
यं विदित्वा नरः साक्षादमृतत्वं हि गच्छति ॥ ५४ ॥
न संदृशे तिष्ठति रूपमस्य
न चक्षुषा पश्यति कश्चिदेनम् ।

---

इत्यादि । आत्मसकाशाद्विविक्तमिन्द्रियादिकं प्रथममनात्मरूपेण विदित्वा तथाऽवस्थितं तत्पश्चात्केवलात्मभावेन विदित्वा । अधिष्ठानभूते स्वात्मनि तत्सर्वं विलाप्येत्यर्थः ॥ ५१ ॥ ५२ ॥ एवं मनआदिकमपि स्वस्वकारणभावापत्त्या विलाप्य सर्वाधिष्ठानभूतमुदीरितरूपं पुरुषस्वरूपमेव मुमुक्षुणा ज्ञातव्यमिति प्रतिपादयति—इन्द्रियेभ्य इत्यादिना । चक्षुरादीन्द्रियेभ्यः सकाशान्मनः श्रेष्ठम् । तदन्तरेण तेषां कार्यकारणत्वाभावात् । तस्माच्च मनसस्तत्कारणभूतं सत्त्वं श्रेष्ठम् । तस्मादपि महानात्मा हैरण्यगर्भी बुद्धिः प्रशस्ता । ततोऽपि प्रशस्तमव्यक्तं तत्कारणत्वेनातिसूक्ष्मत्वात् । तस्मादपि सर्वान्तरः पुरुषः पूर्णोऽनवच्छिन्न आत्मा । अव्यक्तादिस्थावरान्तस्य सर्वस्य कारणत्वात्साक्षाद्व्यापकः स चालिङ्गो लिङ्ग्यते गम्यते येन तल्लिङ्गं बुद्ध्यादि तन्न विद्यते यस्य स तथोक्तः । सकलसांसारिकपुण्यपापलेपस्य लिङ्गशरीराश्रितत्वात्तन्निषेधेनाऽऽत्मनः संसारास्पर्शो वर्णितो भवति ॥ ५३ ॥ ५४ ॥ नन्वसौ निरुपाधिक आत्मा कथं वेदितुं शक्य इत्याशङ्क्याऽऽह—न संदृश इति । संदृशे संदर्शनविषये प्रत्यगात्मनो रूपं स्वरूपं न तिष्ठति । अतो न चक्षुषा । उपलक्षणमेतत् । चक्षुरादिसर्वे-

हृदा मनीषा मनसाऽभिक्लृप्तः
साक्षादात्मा शक्यते वेदितुं सः ॥ ५५ ॥
एवं साक्षात्सच्चिदानन्दरूपं
भावाभावाशेषलोकस्य हेतुम् ।
श्रुत्या युक्त्या ब्रह्म जानन्ति मर्त्या
विद्यायोगादेव मुक्ता भवन्ति ॥ ५६ ॥
विद्यावेद्यं ब्रह्म यद्वेदसिद्धं
तस्याचिन्त्या काचिदस्त्येव शक्तिः ।
शक्त्या भिन्नं तद्भवत्यद्वयं स-
त्सत्यानन्दासङ्गबोधैकरूपम् ॥ ५७ ॥

---

न्द्रियेण कश्चिदप्येनमात्मानं न पश्यति कथं तर्हि स द्रष्टव्य इति । उच्यते । हृदा हृत्स्थया मनीषा मनसः संकल्पादिरूपस्येष्ट इति मनीट् तथाविधया बुद्ध्या मनसा मननरूपेण सम्यग्दर्शनेन चाभिक्लृप्तोऽभिप्रकाशितोऽयमात्मा साक्षाद्यथावद्वेदितुं शक्यते ॥ ५५ ॥ 'य एतद्विदुः' इति श्रुतिवाक्यस्यार्थं प्रवञ्जवशिष्टश्रुतिसंदर्भस्यार्थं तात्पर्यतः संगृह्णाति—एवमिति ॥ ५६ ॥ इति कठवल्लीव्याख्यानम् । एवं सच्चिदानन्दैकरसब्रह्मात्मैक्यपरत्वं कठशाखोपनिषदो दर्शितम् । अथ श्वेताश्वतरशाखोपनिषदोऽपि तत्परत्वं दर्शयति—विद्यावेद्यमित्याद्यध्यायशेषेण । तत्र हि यज्जगत्कारणं तद्ब्रह्मेत्यवगमयितुम् 'कालः स्वभावो नियतिर्यदृच्छा' इत्यादिना कालादीनां जगत्कारणत्वं पूर्वपक्षीकृत्य 'ते ध्यानयोगानुगता अपश्यन्देवात्मशक्तिं स्वगुणैर्निगूढाम्' इति मायाशक्तिसहितस्य द्योतमानस्य स्वप्रकाशचिदात्मकस्य ब्रह्मणो जगत्कारणत्वं वर्णितम् । तादृक्शक्तियोगं तस्य प्रतिपादयति—विद्यावेद्यमिति । या विद्या प्रागनुक्रान्ता तया वेद्यं सकलवेदान्तेषु प्रसिद्धं यद्ब्रह्म तस्याचिन्त्येदृग्विधेति चिन्तयितुमशक्या सर्वदुर्घटकारिणी काचिच्छक्तिरस्त्येव । तद्रहितस्याशक्तस्य

एकं रूपं ब्रह्मणो जीवरूपं
भोग्यं विश्वं ब्रह्मणस्त्वन्यरूपम् ।
अन्यद्रूपं ब्रह्मणः सर्वशास्त्रं
प्रज्ञामात्रं शुद्धरूपं परस्य ॥ ५८ ॥
सर्वाजीवे सर्वसंस्थे बृहन्ते
तस्मिञ्जीवो भ्राम्यते ब्रह्मचक्रे ।
ब्रह्मात्मानं प्रेरितारं च युक्त्या
मत्वा चैकं याति मर्त्योऽमृतत्वम् ॥ ५९ ॥

---

'तत्तेजोऽसृजत' इत्यादिश्रूयमाणकारणत्वानुपपत्तेरित्यर्थः । अत्र भोक्ता भोग्यं भोगप्रदश्चेति त्रैविध्यं प्रतिपिपादयिषितम् । तच्चाद्वितीये ब्रह्मणि कथं घटत इत्याशङ्क्य सा शक्तिस्तद्घटयतीत्याह—शक्त्येति । यत्सत्यादिलक्षणमद्वितीयं ब्रह्म तच्छक्त्या सत्त्वरजस्तमोगुणात्मिकया मायया घटाद्युपाधिभिराकाशवद्भिन्नं भेदयुक्तं भवति ॥ ५७ ॥ तत्र मलिनसत्त्वप्रधानमायावच्छिन्नं यद्ब्रह्मणो रूपं तज्जीवसंज्ञां लभते । तमःप्रधानमायावच्छिन्नं तु भोग्यं जगद्भवति । विशुद्धसत्त्वप्रधानमायोपाधिकं त्वन्यद्रूपमीश्वराख्यं तद्भोगप्रदं भवति । अन्यद्रूपमिति । परस्य मायातीतस्य तस्य ब्रह्मणः कृत्स्नवेदान्तप्रतिपाद्यं केवलं चिदेकरसं यच्छुद्धरूपं तत्तु सोपाधिकरूपत्रितयादन्यद्विलक्षणमित्यर्थः । वक्ष्यति हि भोक्ता भोग्यमिति ॥ ५८ ॥ श्रुतौ सर्वाजीव इति मन्त्रेण जीवस्याविद्यया संसारचक्रे भ्रमणं विद्यया ब्रह्मतादात्म्यं च यदाम्नातं तदाह—सर्वाजीव इति । आ समन्ताज्जीवनमाजीवः सर्वेषामाजीवो यस्मिंस्तत्सर्वाजीवं तस्मिन्सर्वसंस्थे सर्वेषां संस्था मरणं स्थितिर्वा यस्मिंस्तत्सर्वसंस्थं तस्मिन्सर्वसंस्थे । बृहन्ते 'जॄविशिभ्यां झच्' इति विधीयमानो झज्बाहुलकाद्बृंहतेरपि द्रष्टव्यः । बृहति विस्तृते तस्मिन्ब्रह्मचक्रे ब्रह्मणा निर्मिते संसारचक्रे स्वाविद्यया संसरञ्जीवो भोगप्रदेनेश्वरेण भ्राम्यते । स च जीवः

ज्ञाज्ञौ जीवाजीवसंज्ञौ प्रतीत्या
श्रुत्या युक्त्या स्वानुभूत्या ह्यभिन्नौ ।
माया भोक्तुर्भोगहेतुः परात्मा
रूपैरेभिर्विश्वरूपो ह्यकर्ता ॥ ६० ॥
क्षरं माया चाक्षरं जीवरूपं
क्षरात्मना भिद्यते देव एकः ।
तस्य ध्यानाद्योजनात्तत्त्वभावा-
द्भूयश्चान्ते विश्वमायानिवृत्तिः ॥ ६१ ॥

---

स्वार्जितसुकृतवशात्परमेश्वरानुग्रहेण चानुष्ठितश्रवणमननादिसाधनकलापः संस्तेन गुरूपदिष्टशास्त्रश्रवणेन प्रत्यगात्मानमीश्वरं चैकत्वेन ज्ञात्वं युक्त्या मत्वा साक्षात्कृत्यामृतत्वं मोक्षं प्राप्नोतीत्यर्थः ॥ ५९ ॥ अस्य जीवेश्वर-तादात्म्यस्य विस्पष्टं प्रतिपादकमन्यं मन्त्रमुपस्कृत्य व्याचष्टे—ज्ञाज्ञा-विति । ज्ञोऽपरिच्छिन्नचैतन्यैकस्वभावस्तत्पदार्थः परशिवः । अज्ञः कर्ता भोक्ताऽऽवृतज्ञानस्त्वंपदार्थः । तावेतौ जीवाजीवसंज्ञौ प्रतीत्या भिन्नौ । परमार्थतस्तु 'तत्त्वमसि' 'अहं ब्रह्मास्मि' इत्यादिश्रुत्या तदनुसा-रिण्या युक्त्या विद्वदनुभवेन च तावभिन्नौ । उपाधिकृत एव तयोर्भेदो न वास्तव इत्यर्थः । तयोर्भेदापादकमुपाधिं दर्शयति—मायेति । भोक्तुः संसार्यात्मनो भोगहेतुर्माया मलिनसत्त्वप्रधाना । मायावशीकृतो हि प्रत्यगात्मा कर्ता भोक्ता भवति । परमात्मा तु स्वाधीनमायत्वादेभिर्दृश्य-मानैः परिकल्पितैः सर्वैरपि रूपैर्विश्वरूपो नानाविधरूपः सन्नप्यकर्ता कर्तृत्वादिसकलसंसारधर्मरहितः । अतस्तदुपाधिपरित्यागेन तयोरैक्यं स्वध्यवसानमिति भावः ॥ ६० ॥ 'क्षरं प्रधानममृताक्षरं हरः' इति मन्त्रस्यार्थमाह—क्षरं मायेति । क्षरं क्षरणशीलं नश्वरं विद्यानिवर्त्यत्वा-न्मायातत्त्वम् । अक्षरमनश्वरं जीवभावापन्नं ब्रह्मणो रूपम् । तदुभयात्म-नैक एव स्वयंप्रभः परशिवो भिद्यते भिन्नो भासते । मायातत्कार्यभेदस्य

ज्ञात्वा देवं सर्वपाशापहानिः
क्षीणैः क्लेशैर्जन्ममृत्युप्रहाणिः।
तस्य ध्यानान्मूलमायाविभेदे
विश्वैश्वर्यं याति कैवल्यरूपम् ॥ ६२ ॥
एतज्ज्ञेयं नित्यमेवाऽऽत्मसंस्थं
नातः परं वेदितव्यं हि किंचित्।
भोक्ता भोग्यं प्रेरितारं च मत्वा
सर्वं प्रोक्तं त्रिविधं ब्रह्ममेतत् ॥ ६३ ॥

---

तस्मिन्नध्यस्तत्वेन तदव्यतिरेकादित्यर्थः। आत्मज्ञानात्सद्यो मुक्तेरदर्शनात्तस्य तत्साधनत्वं प्रत्यक्षविरुद्धमिति भ्रमव्युदसनाय तस्याभिध्यानादिति श्रुतिमुदाहरति—तस्येति। तस्य निरस्तसमस्तभेदस्य चिदानन्दैकरसस्य च ब्रह्मणो ध्यानात्सर्वं खल्विदं ब्रह्मेति तादृग्ब्रह्मज्ञानाच्छ्रवणजनितात्प्रत्यग्ब्रह्मैक्यविषयात्परोक्षज्ञानाद्वा भेदप्रपञ्चस्य निवृत्तिर्भवति। तदेवाहं ब्रह्मास्मीत्यात्मतया योजनादेकीकरणाद्यौक्तिकान्मननज्ञानाद्वा प्रतीचस्तत्त्वब्रह्मरूपा माया निवर्तते पुनस्तत्त्वभावात्तद्रूपत्वभावनान्निदिध्यासनपर्यायात्तद्विषयमपरोक्षज्ञानं जायते। तेन च मायातद्विलासं निवार्यते। तस्यां निवारितायामपि तज्जनिता वासना प्रारब्धकर्मफलक्षयपर्यन्तमनुवर्ततेऽतो विदुषोऽपि तत्पर्यन्तो देहयात्रार्थो व्यवहारो न विरुद्धः। भूयः पुनश्चान्ते प्रारब्धकर्मफलोपभोगावसाने विदेहकैवल्यावसरे स्ववासनया सह कृत्स्नमायानिवृत्तिर्भवतीत्यर्थः ॥ ६१ ॥ उक्तध्यानादेः फलप्रतिपादिकां श्रुतिं संगृह्णाति—ज्ञात्वेति। देवं द्योतमानं स्वयंप्रकाशं परमात्मानमुदीरितरीत्या सर्वात्मत्वेन ज्ञात्वा सर्वपाशापहानिः। मूलमायाकार्यादयः पाशास्तेषां सर्वेषामविद्यास्मितादीनां क्लेशानां च परिक्षयं प्राप्नोतीत्यर्थः। तस्याभिध्यानात्तृतीयं देहभेद इति श्रुतिं व्याचष्टे—तस्येति। अद्वितीयब्रह्मात्मसाक्षात्कारेण मूलाज्ञाननिवृत्तौ

वह्नेर्यथा योनिगतस्य मूर्ति-
र्न दृश्यते नैव च लिङ्गनाशः ।
स भूय एवेन्धनयोनिगृह्य-
स्तद्वोभयं वै प्रणवेन देहे ॥ ६४ ॥
स्वदेहमरणिं कृत्वा प्रणवं चोत्तरारणिम् ।
ध्याननिर्मथनाभ्यासादेवं पश्येन्निगूढवत् ॥ ६५ ॥

---

सत्यां कैवल्यरूपं केवलात्मावस्थानलक्षणं सर्वैश्वर्यमनपेक्षकमीश्वरत्वं प्राप्नोति ॥ ६२ ॥ आप्तकामत्वान्मायाशक्तिवशाद्भोक्तृभोग्यादिभावेन भिन्नं रूपं परित्यज्य यदेतदुक्तं वास्तवमभिन्नं कैवल्यरूपमेतदेव नित्यं सर्वदाऽऽत्मस्थं प्रत्यगात्मभावेन स्थितं ज्ञेयं साक्षात्कर्तव्यम् । नन्वितोऽन्यदपि किंचिज्ज्ञातव्यं स्यादित्यत आह—नातः परमिति । अतोऽस्मान्निरतिशयानन्दलक्षणाद्ब्रह्मात्मनोऽन्यद्वेदितव्यं किमपि तत्त्वं नास्ति 'अतोऽन्यदार्तम्' इति श्रुतेः । यत्तावद्भोक्तृभोग्यादिभेदेन त्रिविधं जगत्प्रतिभाति तदपि निरूप्यमाणे मायातीते ब्रह्मण्यध्यस्तत्वात्ततो न व्यतिरिच्यत इत्यस्यार्थस्य प्रतिपादकं मन्त्रमुदाहृत्य व्याचष्टे—भोक्तेति । ब्रह्ममेतदिति । अम्भावश्छान्दसः ॥ ६३ ॥ तथाविधस्य ब्रह्मणो ज्ञानोपायं बोधयितुं यदाम्नातं वह्नेर्यथेति तत्संगृह्णाति—वह्नेरिति । योनिगतस्य योनिः कारणमरणिस्तद्गतस्याग्नेर्मूर्तिः स्वरूपं न दृश्यते चक्षुषा त्वगिन्द्रियेण वा नोपलभ्यते । अथापि नैव लिङ्गनाशः । मथ्यमाने सति यदग्निसद्भावगमकं लिङ्गमौष्ण्यं तस्य च नाशो नैव विद्यते । सोऽग्निः पुनर्मथनोपायेनेन्धनयोनिरिन्धनादरणिरूपात्काष्ठाज्जायमानः सन्निन्द्रियग्राह्यो भवति । यथाऽयं दृष्टान्तस्तथा ब्रह्मापि कार्यकारणसंघाते प्रविष्टं सद्विवेकेनानुपलभ्यमानमप्युपायविशेषेण ग्रहीतुं शक्यते तमुपायं दर्शयति—तद्वेति । वाशब्दश्चार्थे । तच्च ब्रह्मोभयविधं परं चापरं च देहे शरीरे हृदयाम्बुजमध्ये ध्येयत्वेन ज्ञेयत्वेन चावस्थितं प्रणवेनोंकारेण गृह्यत इत्यर्थः ॥ ६४ ॥ कथं

आविर्भूतं तिरोभूतं स एव सकलं जगत् ।
वैभवं तस्य विज्ञातुं न शक्यं भाषितुं मया ॥ ३६ ॥
स एव साहसी साक्षात्सर्वरूपतया स्थितः ।
परिज्ञातुं च वक्तुं च समर्थो नापरः पुमान् ॥ ३७ ॥
यथाऽयः पावकेनेद्धं भातीव दहतीव च ।
तथा वेदः शिवेनेद्धः सर्वं वक्तीव भासते ॥ ३८ ॥
अयोऽवयवसंक्रान्तो यथा दहति पावकः ।
तथा वेदेषु संक्रान्तः शिवः सर्वार्थसाधकः ॥ ३९ ॥
तथाऽपि वेदरहितः स्वयं धर्मादिवस्तुनि ।
न प्रमाणं विना तेन वेदोऽपि द्विजपुङ्गवाः ॥ ४० ॥

---

सकलं जगदाविर्भावयुक्तमवभासते । एवं च निर्विकारत्वं जगद्रूपत्वं चोभयमपि वेदसिद्धमिति न तत्र विप्रतिपत्तव्यमित्यर्थः ॥ ३५ ॥ ननु निर्विकारस्य सतः परशिवस्य जगद्रूपत्वेन भानं सर्वथा विप्रतिषिद्धमिति चेत्तत्राऽऽह—वैभवमिति । तस्य परशिवस्यैष महिमा यदयं निर्विकार एवाऽऽविर्भावतिरोभावधर्मकजगदात्मनाऽवभासत इति । अतो न तद्युक्तिभिरन्यथा कर्तुं शक्यत इत्यर्थः ॥ ३६ ॥ स एवेति । यस्तु स्वात्मनस्तादात्म्येन परशिवस्वरूपतां जानन्सर्वजगद्रूपतां पश्यति स एव तत्स्वरूपं ज्ञातुं वक्तुं शक्नोति नेतरोऽज्ञः ॥ ३७ ॥ न केवलं पुरुष एव । वेदोऽपि परशिवस्वरूपानुविद्ध एव शब्दब्रह्मातीन्द्रियार्थस्य भासक इति सदृष्टान्तं प्रतिपादयति—यथाऽय इति । अग्निना तप्तमयो यथा तदीयाभ्यां दाहप्रकाशाभ्यां युज्यते तद्वद्वेदोऽपि सर्वावभासकेन सर्वज्ञेन शिवेनेद्धः सन्सर्वमतीन्द्रियमप्यर्थजातं वक्तीव प्रतिपादयतीव भासत इव च । इवशब्दोऽपरमार्थे । सर्ववस्तुप्रतिपादनसामर्थ्यं भानं चोभयमपि स्वप्रकाशस्य ब्रह्मण एव । तदेव तत्कार्यगतं सत्तदीयत्वेनावभासत इत्यर्थः ॥ ३८ ॥ स्वयं विवृणोति—अयोऽवयवेत्यादिना ॥ ३९ ॥

तस्माद्वेदो महेशेद्धः प्रमाणं सर्ववस्तुनि ।
अन्यथा न जडः शब्दोऽतीन्द्रियार्थस्य साधकः ॥ ४१ ॥
मेरुपार्श्वे तपस्तप्त्वा दृष्ट्वा शंभुं जगद्गुरुम् ।
अयमर्थो मया ज्ञातस्ततस्तस्य प्रसादतः ॥ ४२ ॥
तदाज्ञयैव विप्रेन्द्राः संहितेयं मयोदिता ।
अहं क्षुद्रोऽपि युष्माकं महतामपि देशिकः ॥ ४३ ॥
अभवं सा शिवस्याऽऽज्ञा लङ्घनीया न केनचित् ।
शिवस्याऽऽज्ञाबलाद्विष्णुर्जायते म्रियतेऽपि च ॥ ४४ ॥
ब्रह्मा सर्वजगत्कर्ता विराट्सम्राट्स्वराडपि ।
खरोष्ट्रतरवः क्षुद्रा ब्रह्मविष्ण्वादयोऽभवन् ॥ ४५ ॥
तस्माद् गुरुत्वं मे विप्रा युज्यते न हि संशयः ।
शिष्यत्वं चापि युष्माकं स्वतन्त्रः खलु शंकरः ॥ ४६ ॥
महादेवस्य भक्ताश्च तद्भक्ता अपि देहिनः ।
स्वतन्त्रा वेदविच्छ्रेष्ठाः किं पुनः स महेश्वरः ॥ ४७ ॥
स्वातन्त्र्याद्धि शिवेनैव विषं भुक्तं विनाऽमृतम् ।
ब्रह्मणश्च शिरश्छिन्नं विष्णोरपि तथैव च ॥ ४८ ॥

---

तथाऽपि वेदरहित इति । यद्यपि स्वयं शिवः सर्वावभासकस्तथाऽपि वेदोपाध्यनवच्छिन्नोऽसौ साधारणप्रकाशकत्वान्न धर्मादिवस्तुन्यसाधारणं प्रमाणम् । वेदोऽपि सर्वावभासकेन परशिवेन विना स्वयमपि जडत्वान्न प्रमाणमित्यर्थः ॥४०॥ उक्तमर्थं निगमयति—तस्मादिति । सर्वावभासकेन शिवस्वरूपेणेद्धः प्राप्तप्रकाशनसामर्थ्यः सन्धर्मब्रह्मादिविषये वेद एव प्रमाणं भवतीत्यर्थः ॥ ४१ ॥ उक्तार्थस्यातिरहस्यत्वं ज्ञापयन्स्वस्य तत्प्राप्तिप्रकारमाह—मेरुपार्श्व इति ॥ ४२ ॥ ४३ ॥ देवतान्तरेभ्यः शिवस्य स्वातन्त्र्यं प्रतिपादयति—शिवस्याऽऽज्ञेत्यादिना ॥ ४४ ४७ ॥ विषं भुक्तमिति । समुद्रमथनसमये जातं कालकूटाख्यं विषमित्यर्थः ॥ ४८ —

स्वातन्त्र्याद्धि कृतं तेन मुनीन्द्रा ब्रह्मवादिनः ।
तत्प्रसादान्मया सर्वं विदितं करबिल्ववत् ॥ ४९ ॥
प्रसादबलतः साक्षात्सत्यार्थः कथितो मया ।
प्रसादेन विना वक्तुं को वा शक्तो मुनीश्वराः ॥ ५० ॥
तस्मात्सर्वं परित्यज्य श्रद्धया परया सह ।
मदुक्तं परमाद्वैतं विद्याद्वेदोदितं बुधः ॥ ५१ ॥
विज्ञानेन विनाऽन्येन नास्ति मुक्तिर्न संशयः ।
अतो यूयमपि प्राज्ञा भवताद्वैतवादिनः ॥ ५२ ॥
परमाद्वैतविज्ञानं सिद्धं स्वानुभवेन च ।
श्रुतिस्मृतिपुराणाद्यैस्तर्कैर्वेदानुसारिभिः ॥ ५३ ॥
परमाद्वैतविज्ञानमेव ग्राह्यं यथास्थितम् ।
नान्यतर्कैश्च हन्तव्यमिदमाम्नायवाक्यजम् ॥ ५४ ॥
विनैव परमाद्वैतं भेदं केचन मोहिताः ।
कल्पयन्ति तदा शंभुः सद्वितीयो भविष्यति ॥ ५५ ॥
आम्नायार्थं महाद्वैतं नैव जानन्ति ये जनाः ।
वेदसिद्धं महाद्वैतं को वा विज्ञातुमर्हति ॥ ५६ ॥

---

५० ॥ तस्मात्सर्वमिति । यस्मात्स्वतन्त्रपराशिवप्रसादादेव मया परमाद्वैतमुपदिष्टं तस्मादन्यत्सर्वमनात्मजातं परित्यज्य बुधो हेयोपादेयविवेकज्ञानी पुरुषः परमाद्वैतमेव जानीयादित्यर्थः ॥ ५१ ॥ तज्ज्ञानस्य परमपुरुषार्थस्वरूपतामाह—विज्ञानेनेत्यादिना ॥ ५२ ॥ तस्मिन्परमाद्वैतविज्ञाने प्रमाणमुपन्यस्यति—श्रुतिस्मृतीति ॥ ५३ ॥ नान्यतर्कैरिति । आगमविरुद्धैस्तर्कैरागमैकसमधिगम्यं तदद्वैतस्वरूपं न बाधनीयम् । अत एवाऽऽम्नायते 'नैषा तर्केण मतिरापनेया प्रोक्ताऽन्येनैव सुज्ञानाय प्रेष्ठा' इति ॥ ५४ ॥ ये तूक्तं परमाद्वैतमसहमानाश्चेतनाचेतनात्मकस्य जगतस्ततो भेदं मन्यन्ते तेषां तथाविधव्यवहारो मोहकृत इति प्रतिपादयति—

भिन्नाभिन्नतया देवं परमाद्वैतलक्षणम् ।
कल्पयन्ति महामोहात्केचित्तच्च न संगतम् ॥ ५७ ॥
भेदाभेदेऽपि भेदांशो मिथ्या भवति सत्तमाः ।
भेदानिरूपणादेव धर्म्यादेरनिरूपणात् ॥ ५८ ॥
तस्मान्नास्तीश्वरादन्यत्किंचिदप्यास्तिकोत्तमाः ।
द्वितीयाद्वै भयं जन्तोर्भवतीत्याह हि श्रुतिः ॥ ५९ ॥
को मोहस्तत्र कः शोक एकत्वमनुपश्यतः ।
इति चाऽऽह हि सा साध्वी श्रुतिरद्वैतमास्तिकाः ॥ ६० ॥
एकत्वमेव वाक्यार्थो नापरः परमास्तिकाः ।
स्तुतिनिन्दे विरुध्येते भेदो यदि विवक्षितः ॥ ६१ ॥

---

विनैवेति । सद्वितीयो भविष्यतीति । एकमेवाद्वितीयमिति श्रुतिसिद्धमद्वैतं व्याहन्येतेत्यर्थः ॥ ५५ ॥ भेददर्शिनां मोहकारणमाह—वेदसिद्धमिति । वेदैकसमधिगम्यं परमाद्वैतं तदनभिज्ञो जनः को नाम ज्ञातुं शक्नुयात् । ईश्वरानुग्रहसमासादितश्रुतिप्रमाणैकनिष्ठः पुरुषो हि तज्ज्ञातुमर्हतीत्यर्थः ॥ ५६ ॥ भेदाभेदपक्षोऽपि न युक्त इत्याह—भिन्नेति ॥ ५७ ॥ भेदांशो यदि प्रमाणसिद्धः स्यात्तदा हि भेदाभेदपक्षोपकल्पनेन तत्सिद्धि-रस्तीत्याह—भेदाभेद इति । भेदानिरूपणादिति तस्मिन्मिथ्यात्वे हेतुः । भेदस्य प्रमाणेन निरूपयितुमशक्यत्वादित्यर्थः । अनिरूपणे कारणमाह—धर्म्यादेरिति । इदमस्माद्भिन्नमिति भेदज्ञानं धर्मिप्रतियोगिज्ञानाधीनं स च धर्मिप्रतियोगिभावो न भेदमन्तरेणेत्यात्मान्योन्याश्रयचक्रकानवस्थादूष-णानां प्रसक्तेस्तद्धेतुकभेदो दुर्निरूपः । एतच्च पूर्वभागस्य दशमेऽध्याये—'स्वरूपत्वेन वा विप्रा धर्मत्वेनैव वा भिदा । अपि वर्षशतेनापि वस्तुतो न निरूप्यते ' इत्यादिना प्रपञ्चितम् ॥५८॥ प्रतिपादितमर्थमुपसंहरति—तस्मादिति । तत्र श्रुती प्रमाणयति—द्वितीयादिति । वाजसनेयकेऽप्याम्नाय-ते—'द्वितीयाद्वै भयं भवति' इति ॥ ५९ ॥ ६० ॥ 'तत्र को मोहः कः

अतीव शुद्धचित्तानां केवलं करुणाबलात् ।
परमाद्वैतमाम्नायात्प्रभाति श्रद्धया सह ॥ ६२ ॥
शिवभट्टारकस्यैव प्रसादे पुष्कले सति ।
परमाद्वैतमाभाति यथावन्नान्यहेतुना ॥ ६३ ॥
न भाति परमाद्वैतं प्रसादरहितस्य तु ।
दुर्लभः खलु देवस्य प्रसादः परमास्तिकाः ॥ ६४ ॥
अतश्च वेदोदितवर्त्मनैव विहाय वादान्तरजन्मबुद्धिम् ।
विमुक्तिकामः परमाद्वितीयं समाश्रयेदेव शिवस्वरूपम् ॥

इति श्रीसूतसंहितायां यज्ञवैभवखण्डस्योपरिभागे सूतगीतायां सामान्यसृष्टिकथनं नाम तृतीयोऽध्यायः ॥ ३ ॥

## चतुर्थोऽध्यायः ।

### ४. विशेषसृष्टिकथनम् ।

सूत उवाच—
ईश्वरो जगतः कर्ता मायया स्वीयया पुरा ।
अभेदेन स्थितः पूर्वकल्पवासनयान्वितः ॥ १ ॥

---

शोकः' इत्यद्वैतज्ञानस्य या स्तुतिर्या च 'द्वितीयाद्वै भयं भवति' इति द्वैतज्ञानस्य निन्दा ते उभे अपि भेदविवक्षायां विरुध्येते इत्यर्थः ॥६१॥ नन्वेतादृशं वेदवाक्यमधीयाना अपि संसारिणो दृष्टास्तत्राऽऽह—अतीवेति । परमेश्वरार्पणबुद्ध्याऽनुष्ठितनित्यनैमित्तिकपरितोषितपरशिवप्रसादवतामेव वेदादीदृगर्थप्रतिपत्तिर्जायते नान्येषामित्यर्थः ॥ ६२—६५ ॥

इति श्रीसूतसंहितातात्पर्यदीपिकायां यज्ञवैभवखण्डस्योपरिभागे सूतगीतायां सामान्यसृष्टिकथनं नाम तृतीयोऽध्यायः ॥ ३ ॥

इत्थमद्वितीयाद्ब्रह्मणः सृष्टेरसंभवमाशङ्क्य श्रुतिप्रामाण्यबलान्मायाशक्तिवशाच्च सा जगत्सृष्टिरुपपन्नेति प्रतिपादितम् । तां सृष्टिं विस्तरेण प्रतिपादयितुमारभते—ईश्वरो जगतः कर्तेति । तत्र तावत्सृष्ट्यभिधानो-

कालकर्मानुगुण्येन स्वाभिन्नस्वीयमायया ।
अभिन्नोऽपि तया स्वस्य भेदं कल्पयति प्रभुः ॥ २ ॥
कल्पितोऽयं द्विजा भेदो नाभेदं बाधते सदा ।
कल्पितानामवस्तुत्वादविरोधश्च सिध्यति ॥ ३ ॥

---

पोद्धातत्वेन प्रलीनावस्था प्रतिपाद्यते । योऽयं जगत्स्रष्टेश्वरः स पुरा सृष्टिकाले स्वसंबन्धिन्या मायया सत्त्वरजस्तमोगुणात्मिकयैकीभावेन स्थितः । स्वीययेति विशेषणात्सांख्याभिमतप्रकृतिवन्मायायाः स्वातन्त्र्यव्युदासः । यद्यपि प्रलीनावस्थायां स्वप्रतिष्ठे ब्रह्मणि स्थिता माया स्वगोचरवृत्त्यभावान्न विशेषेण प्रतीयते तथाऽपि सा ब्रह्मरूपचित्प्रकाशेनैव भास्यत इति नासत्त्वम् । अत एव मायायास्तदानीमवस्थानात्पूर्वस्मिन्कल्पे मायाकार्याणां वियदादिभूतभौतिकादीनां प्रलीनानां मायागतवासनाभिरप्यन्वित एव तदानीमीश्वरो भवतीत्यर्थः ॥ १ ॥ सा च माया प्रलीनावस्थायामपि क्षोभहेतोरभावादविक्षुब्धैव सत्यसत्प्राया भवति । यदा पुनरसौ मायीश्वरः सिसृक्षति तदा केन क्रमेण सृजतीति स प्रतिपाद्यते—कालकर्मेति । प्राणिनां परिपक्वपुण्यपापात्मककर्मफलभूतसुखदुःखोपभोगार्था हि पारमेश्वरी जगत्सृष्टिः । तानि च प्राणिकर्माणि यदा कालवशात्परिपक्वानि भवन्ति तदानीं तत्कर्मानुगुण्येन स्वरूपादभिन्नया स्वसंबन्धिन्या मायया स्वयमेकीभूतोऽपीश्वरस्तया मायया स्वस्य भेदं परिकल्पयति । स्वयमेकः शक्तिभूता माया चान्येति । एतच्च भेदपरिकल्पनं तयैव मायया सोपाधिकस्यैवेति द्रष्टव्यम् । असङ्गोदासीनकूटस्थचिन्मात्ररूपस्य परशिवस्य निरुपाधिकस्येदृग्विधव्यवहारानुपपत्तेरित्यर्थः ॥ २ ॥ नन्वीश्वरेण भेदोऽपि निर्मितश्चेदद्वैतव्याघात इत्याशङ्क्याऽऽह—कल्पितोऽयमिति । ईश्वरेण मिथ्याभूतत्वेनैव परिकल्पितत्वात्तेन वास्तवाभेदबाधो न संभवतीत्यर्थः । कुत इत्यत आह—कल्पितानामिति । शुक्त्यादौ कल्पितस्य रूप्यादेरवस्तुत्वदर्शना-

पुनः पूर्वक्षणोत्पन्नवासनाबलतोऽनघाः ।
ईक्षिता पूर्ववद्भूत्वा स्वशक्त्या परया युतः ॥ ४ ॥
मायाया गुणभेदेन रुद्रं विष्णुं पितामहम् ।
सृष्ट्वानुप्राविशत्तेषामन्तर्यामितया हरः ॥ ५ ॥
तेषां रुद्रः पराभेदात्परतत्त्ववदेव तु ।
करोति सर्गस्थित्यन्तं रुद्ररूपेण सत्तमाः ॥ ६ ॥
संहरत्यविशेषेण जगत्सर्वं चराचरम् ।
विष्णुरप्यास्तिकाः साक्षात्पराभेदेन केवलम् ॥ ७ ॥
करोति सर्गस्थित्यन्तं विष्णुरूपेण हे द्विजाः ।
पालयत्यविशेषेण जगत्सर्वं चराचरम् ॥ ८ ॥

---

द्रस्यापि कल्पितत्वाविशेषात्तथात्वमभ्युपेतव्यम् । अत एव वस्तूपाधावभेदो मायोपाधौ भेद इति भिन्नविषयत्वात्तयोरविरोधश्च सिध्यति ॥ ३ ॥ पुनः पूर्वेत्यादि । एवं मायायाः स्वस्य च भेदं परिकल्प्य पुनः पूर्वस्मिन्कल्पे मायासंबन्धिनो ये गुणाः सत्त्वरजस्तमोरूपास्तज्जनितवासनाबलेन तदुपाधिकः परशिवः पूर्वकल्प इवेक्षिता भूत्वा स्रष्टव्यजगत्पर्यालोचनमीक्षणं करोति । तथा चाऽऽम्नातम्—'तदैक्षत बहु स्यां प्रजायेय' इति । एवमीक्षितृत्ववस्थां प्राप्तः स्वकीयया शक्त्या सहितः सन्पुनः प्राणिकर्मवशात्तस्या मायायाः प्रविभक्ता ये गुणाः सत्त्वरजस्तमोलक्षणास्तदुपाधिवशेन रुद्रादीन्सृष्ट्वा तेषामन्तर्यामितया सृष्टिस्थित्यादिव्यापारेषु तान्नियन्तुं स्वयमीश्वरः प्रविष्टवानित्यर्थः ॥ ४ ॥ ५ ॥ तेषां रुद्र इत्यादि । एते च मायाया गुणोपाधिकत्वान्मायायाश्च जीवोपाध्यविद्यावत्स्वाश्रयव्यामोहकत्वाभावात्स्वात्मनः परतत्त्वरूपानुसंधानेनाभेदेनावस्थितास्तथा चैषां परतत्त्वरूपत्वं साधारणम् । रुद्रादिरूपत्वं तु प्रतिनियतम् । तत्र परतत्त्वरूपेणैव त्रयोऽपि सृष्टिस्थितिसंहृतीनां कर्तारः । प्रतिनियतरुद्रादिरूपेण तु संहृत्यादेरेकैकस्यैव कर्तार इत्यर्थः ॥ ६—९ ॥ शब्दा-

ब्रह्माऽपि मुनिशार्दूलाः पराभेदेन केवलम् ।
करोति सर्गस्थित्यन्तं ब्रह्मरूपेण सत्तमाः ।
करोति विविधं सर्वं जगत्पूर्वं यथा तथा ॥ ९ ॥
शब्दादिभूतसृष्टिस्तु परस्यैव शिवस्य तु ॥ १० ॥
सर्वान्तःकरणानां तु समष्टेः सृष्टिरास्तिकाः ।
त्रिमूर्तीनां हरस्यैव प्राधान्येन न संशयः ॥ ११ ॥
प्राणानामपि सर्वेषां समष्टेः सृष्टिरास्तिकाः ।
अपि रुद्रस्य तस्यैव प्राधान्येन न संशयः ॥ १२ ॥
सर्वज्ञानेन्द्रियाणां तु समष्टीनां जनिर्द्विजाः ।
त्रिमूर्तीनां हरस्यैव प्राधान्येन न संशयः ॥ १३ ॥
सर्वकर्मेन्द्रियाणां तु समष्टीनां जनिर्द्विजाः ।
त्रिमूर्तीनां हरस्यैव प्राधान्येन न संशयः ॥ १४ ॥
तथाऽपि परमं तत्त्वं त्रिमूर्तीनां तु कारणम् ।
ब्रह्मविष्णुमहेशानां सृष्टावुपकरोति च ॥ १५ ॥
उपचारतया तेऽपि स्रष्टार इति शब्दिताः ।
तत्रापि तत्त्वतः स्रष्टृ ब्रह्मैवाद्वयमास्तिकाः ॥ १६ ॥

---

दीत्यादि । यद्यपि ब्रह्मविष्ण्वादयो मायागुणभेदोत्पन्नास्तथाऽपि शब्द-तन्मात्रादिलक्षणसूक्ष्मवियदादिभूतसृष्टिस्तु मायिनः परशिवस्यैव न तु रजोगुणाधिकस्य ब्रह्मणः । तत्र सृष्टानां सूक्ष्मभूतानां ये पञ्च सत्त्वांशास्तत्परिणामरूपाणि प्राणिनामन्तःकरणानि । तेषां समष्टिः सकलसत्त्वांशाख्यं हैरण्यगर्भमन्तःकरणं तत्सृष्टिस्तु त्रिमूर्तीनां मध्ये रुद्रस्यैव । स खलु निरतिशयसत्त्वोपाधिकतया सार्वज्ञेन हरिब्रह्मादिभ्यो विशिष्यत इत्युक्तम् ॥ १०—१४ ॥ तथाऽपीति । समष्ट्यन्तःकरणसृष्टौ रुद्रस्य स्रष्टृत्वम् । तथाऽपि त्रिमूर्तीनां कारणभूतं यत्परशिवस्वरूपं तद्ब्रह्मविष्ण्वादिष्वनुगतं तत्कर्तृसृष्टावप्युपकरोति । अतः सर्वस्य परशिवस्यैव परमार्थतः

व्यष्टयस्तु समष्टिभ्यो जायन्ते ब्राह्मणानघाः ।
समष्टिषु विजायन्ते देवताः पूर्वकल्पवत् ॥ १७ ॥
समष्टिव्यष्टिरूपाणां सृष्टानां पालको हरिः ।
रुद्रस्तेषां तु संहर्ता द्विजा रूपान्तरेण च ॥ १८ ॥
या देवताऽन्तःकरणसमष्टौ पूर्वकल्पवत् ।
विजाता स मुनिश्रेष्ठा रुक्मगर्भ इतीरितः ॥ १९ ॥
जाता प्राणसमष्टौ या स सूत्रात्मसमाह्वयः ।
दिग्वाय्वर्कजलाध्यक्षपृथिव्याख्यास्तु देवताः ।
जायन्ते क्रमशः श्रोत्रप्रमुखेषु समष्टिषु ॥ २० ॥

---

स्रष्टृत्वम् । तदभेदज्ञानबलाद्विष्णवादयोऽप्युपचारेण स्रष्टार उच्यन्त इत्यर्थः ॥ १५ ॥ १६ ॥ व्यष्टयस्तु समष्टिभ्य इति । तथा च वियदादिभूतजगत्सर्वसत्त्वांशैरारब्धं समष्ट्यन्तःकरणम् । तथा तद्गतसर्वरजोंशैरारब्धः समष्टिप्राणः । एकैकभूतगतसर्वसत्वांशैरारब्धानि हैरण्यगर्भाणि समष्टिरूपाणि ज्ञानेन्द्रियाणि । तथैकैकभूतगतसर्वरजोंशैरारब्धानि हैरण्यगर्भाणि समष्टिकर्मेन्द्रियाणि । एवमीश्वरेणान्तःकरणादीनां समष्टिषूत्पादितासु तेषां व्यष्टयस्तु समष्टिसकाशादेव जायन्ते । समष्ट्यन्तःकरणाद्युपाधिक एवेश्वरो व्यष्ट्यन्तःकरणादीनां स्रष्टेत्यर्थः । समष्टिषु विजायन्त इति । तासु चान्तःकरणादिसमष्टिषु वक्ष्यमाणदेवताः पूर्वकल्पानुसारेणोत्पद्यन्ते ॥१७॥ समष्टिव्यष्टिरूपाणामित्यादि । बहिरवस्थितसत्त्ववशेन हरिस्तेषां सर्वेषां पालकः । रुद्रस्तु स्वात्मनः सृष्टानामपि समष्टीनां रूपान्तरेण परतत्त्वरूपाद्रूपान्तरं रुद्रत्वाकार एव तेन संहर्ताऽपि भवतीत्यर्थः ॥ १८ ॥ अथ समष्टिषु विजाता देवताः क्रमेण दर्शयति—या देवतेत्यादिना । अन्तःकरणसमष्टौ या देवता जायते सा हिरण्यगर्भाभिधेयेत्यर्थः । एतच्च शिवमाहात्म्यखण्डे 'हिरण्यगर्भं वक्ष्यामि' इत्यादिना विस्तरेण प्रतिपादितम् ॥ १९ ॥ जाता प्राणसमष्टाविति । प्रागुदीरितप्राणसमष्टौ

पादपाण्यादिषु प्राज्ञाः कर्मेन्द्रियसमष्टिषु ।
त्रिविक्रमेन्द्रप्रमुखा जायन्ते देवताः क्रमात् ॥ २१ ॥
समष्टिषु विजाता या देवतास्ता यथाक्रमम् ।
व्यष्टिभूतेन्द्रियाणां तु नियन्त्र्यो देवता द्विजाः ॥ २२ ॥
मारुतस्त्वगधिष्ठाता दिग्देवी कर्णदेवता ॥ २३ ॥
नेत्राभिमानी सूर्यः स्याज्जिह्वाया वरुणस्तथा ।
घ्राणाभिमानिनी देवी पृथिवीति प्रकीर्तिता ॥ २४ ॥
अग्निर्वागभिमानी स्यादुपस्थस्य प्रजापतिः ।
पायोर्मित्रोऽभिमान्यात्मा पादस्यापि त्रिविक्रमः ॥
इन्द्रो हस्तनियन्ता स्याच्छिवः सर्वनियामकः ॥ २५ ॥
मनो बुद्धिरहंकारश्चित्तं चेति चतुर्विधम् ।
स्यादन्तःकरणं प्राज्ञाः क्रमात्तेषां हि देवताः ॥ २६ ॥
चन्द्रो वाचस्पतिर्विप्राः साक्षात्कालाग्निरुद्रकः ।
शिवश्चेति मया प्रोक्ताः साक्षाद्वेदान्तपारगाः ॥ २७ ॥

---

जायमाना या देवता स एव सूत्रात्मेत्युच्यते । तदपि प्रागुक्तम्— 'समष्टिभूतः प्राणानां भवेत्प्राणः शिवाज्ञया । तत्रस्थो भगवान्विष्णुः सूत्रात्मेति प्रकीर्तितः' इति । समष्टिरूपेषु श्रोत्रादीन्द्रियेषु वाक्पाण्यादिकर्मेन्द्रियेषु क्रमेण जायमानान्देवान्दर्शयति—दिग्वाय्वित्यादिना । जलाध्यक्षो वरुणः ॥ २० ॥ त्रिविक्रमेन्द्रप्रमुखा इति । प्रमुखग्रहणेन वागभिमानिनो वक्ष्यमाणा अग्न्यादयः संगृहीताः ॥ २१॥ समष्टिषु विजाता इति । समष्टयन्तःकरणादिषु या देवता जातास्ता व्यष्टीनां नियन्त्र्यो भवन्ति ॥ २२ ॥ तत्र ज्ञानेन्द्रियाणां दर्शयति —मारुत इति ॥ २३ ॥ ॥ २४ ॥ कर्मेन्द्रियाणामपि ता दर्शयति—अग्निर्वागित्यादिना । शिवः सर्वनियामक इति । एतेषु वाय्वादिष्वधिष्ठातृदेवेषु तद्रूपेणावस्थितः शिव एव सर्वस्य नियामकः । वाय्वादीनामपि नियन्तव्यत्वेन पर-

आकाशादीनि भूतानि स्थूलानि पुनरास्तिकाः ।
जायन्ते सूक्ष्मभूतेभ्यः पूर्वकल्पे यथा तथा ॥ २८ ॥
अण्डभेदास्तथा लोकभेदास्तेषु च चेतनाः ।
अचेतनानि चान्यानि भौतिकानि च पूर्ववत् ॥ २९ ॥
विजायन्ते च भोगार्थं चेतनानां शरीरिणाम् ।
भोक्तारः पशवः सर्वे शिवो भोजयिता परः ॥ ३० ॥
सुखदुःखादिसंसारो भोगः सर्वमिदं सुराः ।
स्वप्नवद्देवदेवस्य माययैव विनिर्मितम् ॥ ३१ ॥
मायया निर्मितं सर्वं मायैव हि निरूपणे ।
कारणव्यतिरेकेण कार्यं नेति हि दर्शितम् ॥ ३२ ॥
मायाऽपि कारणत्वेन कल्पिता मुनिपुङ्गवाः ।
अधिष्ठानातिरेकेण नास्ति तत्त्वनिरूपणे ॥ ३३ ॥

---

मार्थतो नियन्तृत्वासंभवादित्यर्थः । अन्तःकरणचतुष्टयस्य क्रमेण देवता दर्शयति—चन्द्र इति ॥२५–२७॥ एवं सूक्ष्मभूतानां तत्कार्याणां च समष्टि-व्यष्टिभावेनावस्थितानां साधिष्ठातृकाणां सृष्टिं प्रतिपाद्य स्थूलभूतानां तत्कार्यस्थूलप्रपञ्चस्य च सृष्टिं प्रतिपादयति—आकाशादीनीत्यादिना ॥ २८—३० ॥ स्वप्नवदिति । यथा स्वप्ने भोक्तृभोग्यभोगप्रदरूपेण त्रिधाऽवस्थितः प्रपञ्चोऽनुभूयत एवमेव परमेश्वरमायया निर्मितं भोक्तृ-भोग्यादिलक्षणं जगत्प्रत्येतव्यमित्यर्थः ॥ ३१ ॥ ननु मायाया अपि कैश्चिद्वस्तुत्वमङ्गीकृतमतस्तन्निर्मितस्य जगतोऽपि प्राग्वस्तुत्वं किं न स्यादित्यत आह—माययेति । यन्मायाकार्यं तत्सर्वं निरूपणे कारणभू-तमायैवेत्यङ्गीकार्यम् । कारणव्यतिरेकेण कार्यं नास्तीतिच्छन्दोगश्रुतिव्या-ख्यानावसरे यस्य स्मरणमात्रेणेत्यादिना प्रतिपादितत्वात् । एवं हि तत्र श्रुतावाम्नातम्—'वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यम्' इति । अनेन चावधारणेन कार्यस्य घटशरावादेः सर्वस्य कारणमात्ररूपता

व्यवहारदृशा मायाकल्पना नैव वस्तुतः ।
वस्तुतः परमाद्वैतं ब्रह्मैवास्ति न चेतरत् ॥ ३४ ॥
मायारूपतया साक्षाद्ब्रह्मैव प्रतिभासते ।
जगज्जीवादिरूपेणाप्यहो देवस्य वैभवम् ॥ ३५ ॥
स्वस्वरूपातिरेकेण ब्रह्मणो नास्ति किंचन ।
तथाऽपि स्वातिरेकेण भाति हा दैववैभवम् ॥ ३६ ॥
जगदात्मतया पश्यन्बध्यते न विमुच्यते ॥ ३७ ॥
सर्वमेतत्परं ब्रह्म पश्यन्स्वानुभवेन तु ।
मुच्यते घोरसंसारात्सद्य एव न संशयः ॥ ३८ ॥

---

निर्धारिता । अतः कार्यस्यापि तद्व्यतिरेकोऽवगन्तव्यः ॥ ३२ ॥ तर्हि माययैव द्वैतापत्तिरित्यत आह—मायाऽपीति । यदि माया पृथग्वस्तुभूता स्यात्तदाऽद्वैतव्याकोपः । सा तु चिन्मात्ररूपे परशिवस्वरूपे ब्रह्मणि विक्रियमाणजगदुपादानत्वेन कल्पिता । अतः साऽपि विचार्यमाणा शुक्तिरूप्यादिवदधिष्ठानाद्ब्रह्मणो न व्यतिरिच्यत इत्यर्थः ॥ ३३ ॥ व्यवहारदृशेति । व्यवहारदृष्ट्यैव मायापरिकल्पनं न तु वस्तुतः । प्रातीतिकरूपेणैव व्यवहारस्योत्पन्नत्वादिति भावः । यद्वस्तु पारमार्थिकं तद्दर्शयति—वस्तुत इति ॥ ३४ ॥ मायारूपतयेति । तत्पारमार्थिकं ब्रह्मैवाविद्यमानमायातत्कार्यजगज्जीवादिभेदभ्रमस्याधिष्ठानं सत्तदात्मना भासते ॥ ३५ ॥ न तु ततोऽतिरिक्तं किंचिदस्तीत्याह—स्वस्वरूपेति । स्वस्वरूपातिरेकेण प्रतिभाने कारणमाह—तथापीति ॥ ३६ ॥ जगदात्मतयेति । तत्र जगद्रूपेण ज्ञानं संसारकारणं सर्वस्य विकारप्रपञ्चस्य 'इदं सर्वं यदयमात्मा' इत्यादिश्रुतिप्रमाणबलेन ब्रह्मात्मना ज्ञानं मोक्षसाधनमित्यर्थः । तत्राप्यपरोक्षज्ञानस्य विशेषमाह—सर्वमेतदिति । यदेतत्सर्वं जगद्ब्रह्मेति श्रुत्या बोधितमर्थं मनननिदिध्यासनाभ्यां समुपनीतेन स्वानुभवेन साक्षात्कुर्वंस्तत्समकालमेव संसारान्मुच्यत इत्यर्थः ॥ ३७ ॥ ३८ ॥

सर्वमेतत्परं ब्रह्म विदित्वा सुदृढं बुधाः ।
मानतर्कानुभूत्यैव गुरूक्त्या च प्रसादतः ।
ज्ञानप्राकट्यबाहुल्याज्ज्ञानं च स्वात्मनैव तु ॥ ३९ ॥
स्वात्मना केवलेनैव तिष्ठन्मुच्येत बन्धनात् ।
य एवं वेद वेदार्थं मुच्यते स तु बन्धनात् ॥ ४० ॥
सोपानक्रमतश्चैवं पश्यन्नात्मानमद्वयम् ।
सर्वं जगदिदं विप्राः पश्यन्नपि न पश्यति ॥ ४१ ॥
भासमानमिदं सर्वं भानरूपं परं पदम् ।
पश्यन्वेदान्तमानेन सद्य एव विमुच्यते ॥ ४२ ॥
एवमात्मानमद्वैतमपश्यन्नेव पश्यतः ।
जगदात्मतया भानमपि स्वात्मैव केवलम् ॥ ४३ ॥

---

एतदेव विवृणोति—सर्वमेतदिति । प्रमाणतर्कानुभवैर्गुरूपदेशतत्प्रसादाभ्यां च विज्ञानाविर्भावस्यातिशय उपलभ्यते । तथाऽऽविर्भूतं ज्ञानं स्वरूपाज्ञानं निवर्तयत्कतकरजोन्यायेन स्वात्मनैव चिन्मात्ररूपेणावशिष्यत इत्यर्थः ॥३९॥ स्वात्मना केवलेनेति । केवलेन निरस्तसमस्तोपाधिना स्वप्रकाशचिन्मात्ररूपेणैव तिष्ठन्संसारबन्धविनिर्मुक्तो भवति ॥४०॥ सोपानक्रमत इति । प्रथमं शाब्दज्ञानं तस्य च मनननिदिध्यासनाभ्याम-नुभवपथप्रापणं पुनर्निःशेषसंशयोच्छेदेन ज्ञानप्राकट्यलाभः तस्यापि ज्ञानस्य स्वरूपचिन्मात्रे पर्यवसानमित्यनेन सोपानक्रमेणेत्यर्थः । पश्यन्नपीति । अज्ञजनव्यवहारदशायां चक्षुरादीन्द्रियैरनात्मवस्तु जानन्नपि कारणब्रह्मात्मनैव विद्वान्पश्यति ॥ ४१ ॥ एतदेव विशदयति—भासमानमिति । चित्प्रकाशबलेन भासमानं सर्वमिदं जगच्चिन्मात्ररूपं विकारजेभ्यः परं पदं पदनीयं निरतिशयानन्दरूपतया प्राप्तव्यं ब्रह्म वेदान्तवाक्यरूपेण प्रमाणेन जानन्सद्य एव विमुच्यते ॥ ४२ ॥ पश्यत इति । उक्तविधमद्वितीयमात्मतत्त्वं दर्शनक्रियाविषयत्वाभावात्कर्मकर्तृभावेनैवापश्यन्नेव

विदित्वैवं महायोगी जगद्भानेऽपि निश्चलः ।
यथाभातमिदं सर्वमनुजानाति चाऽऽत्मना ॥ ४४ ॥
निषेधति च तत्सिद्धिरनुज्ञातस्य केवलम् ।
तदसिद्धिर्निषेधोऽस्य सिद्ध्यसिद्धी च तस्य न ॥ ४५ ॥
प्रकाशात्मतया साक्षात्स्थितिरेवास्य केवलम् ।
विद्यते नैव विज्ञानं नाज्ञानं न जगत्सदा ॥ ४६ ॥
प्रकाशात्मतया साक्षात्स्थितिरित्यपि भाषणम् ।
अहं वदामि मोहेन तच्च तस्मिन्न विद्यते ॥ ४७ ॥
तस्य निष्ठा मया वक्तुं विज्ञातुं च न शक्यते ।
श्रद्धामात्रेण यत्किंचिज्जल्प्यते भ्रान्तचेतसा ॥ ४८ ॥

---

स्वरूपप्रकाशेन यः पश्यति तस्येत्यर्थः । जगदात्मतया भानमिति । यथा स्वात्मविषयं ज्ञानं ततः स्वात्ममात्रं भवति तथा जगदात्मतया भानमपि विषयजगद्विनिर्मुक्तं सत्केवलं स्वात्मैव भवति । अद्वितीयात्मदर्शनेन जगतो ग्रस्तत्वादिति भावः ॥ ४३ ॥ इत्थं सम्यग्ज्ञानवतो जीवन्मुक्तस्य स्थितिप्रकारमाह—विदित्वैवमिति । एवं निर्विचिकित्सितं ज्ञात्वाऽऽत्मानं विद्वाञ्जगत्प्रतीतावपि स्वयं निश्चलो भवति । नैश्चल्यमेव स्फोरयति—यथेति । येन येन प्रकारेण यद्यदिदं भासते तत्सर्वं साक्षिरूपेणानुक्रमेण जानाति । अविद्यमानं च निषेधति । स्वात्मना न दर्शयति । साक्षिचैतन्यात्मनैव भावाभावात्मकं द्विविधं जगदवस्थितं प्रकाशयतीत्यर्थः । तस्य प्रतीयमानस्य सिद्धिः सद्भावोऽसिद्धिरसद्भावश्चेत्येतदुभयमनुज्ञातस्य निषिद्धस्य च भवति । न तु तस्यानुज्ञातुर्निषेद्धुश्च चिन्मात्ररूपस्याऽऽत्मनस्ते सिद्ध्यसिद्धी भवतः ॥ ४४ ॥ ४५ ॥ अस्य तु केवलं चित्प्रकाशात्मतयाऽऽपरोक्ष्येण स्थितिरेव भवति । न च तस्यामवस्थायां तत्त्वज्ञाननिवर्त्यमज्ञानं तत्कार्यं जगद्वा किंचिदपि विद्यते । सकार्यस्याज्ञानस्य ज्ञानेन निवर्तितत्वात् ज्ञानस्य च कतकरजोन्यायेन स्वयमेव लीनत्वादित्यर्थः ॥४६॥

इति गुह्यमिदं कथितं मया निखिलोपनिषद्धृदयंगमम् ।
हरपङ्कजलोचनपालितं विदितं यदि वेदविदेव सः ॥ ४९ ॥

इति श्रीसूतसंहितायां यज्ञवैभवखण्डस्योपरिभागे सूतगीतायां विशेषसृष्टिकथनं नाम चतुर्थोऽध्यायः ॥ ४ ॥

## पञ्चमोऽध्यायः

### ५. आत्मस्वरूपकथनम् ।

सूत उवाच—

वक्ष्यामि परमं गुह्यं युष्माकं मुनिपुङ्गवाः ।
विज्ञानं वेदसंभूतं भक्तानामुत्तमोत्तमम् ॥ १ ॥
रुद्रविष्णुप्रजानाथप्रमुखाः सर्वचेतनाः ।
स्वरसेनाहमित्याहुरिदमित्यपि च स्वतः ॥ २ ॥
इदंबुद्धिश्च बाह्यार्थे त्वहंबुद्धिस्तथाऽऽत्मनि ।
प्रसिद्धा सर्वजन्तूनां विवादोऽत्र न कश्चन ॥ ३ ॥

---

प्रकाशात्मतयेति । एतदपि पदकदम्बकरूपं वाक्यम् । तच्च बहुषु पदार्थेषु सत्स्वेव प्रयोक्तुं शक्यते । अद्वितीये तु वस्तुनीदृग्विधवाक्यप्रयोगोऽपि मदज्ञानविलसित इति ब्रुवता सूतेन तस्यावाङ्मनसगम्यत्वं प्रतिपाद्यते ॥ ४७—४९ ॥

इति श्रीसूतसंहितातात्पर्यदीपिकायां यज्ञवैभवखण्डस्योपरिभागे सूतगीतायां विशेषसृष्टिकथनं नाम चतुर्थोऽध्यायः ॥ ४ ॥

इत्थं परागर्थप्रपञ्चस्य पराशिवस्वरूपान्मायावशात्सृष्टिं प्रतिपाद्य तदुपलक्षितमद्वितीयं परशिवस्वरूपमेव मोक्षार्थिभिर्ज्ञातव्यमित्युपदिष्टम् । अथाहमर्थविवेकेनापि तत्स्वरूपं प्रतिपादयितुमुपक्रमते—वक्ष्यामीति ॥ १ ॥ २ ॥ अहमर्थस्य चिन्मात्ररूपतां वक्तुमिदंबुद्धेरनात्मविषयत्वमहंबुद्धेश्चाऽऽत्मविषयत्वं लोकसिद्धमिति दर्शयति—इदंबुद्धिश्चेत्यादिना

इदमर्थे घटाद्यर्थेऽनात्मत्वं सर्वदेहिनाम् ।
अहमर्थे तथाऽऽत्मत्वमपि सिद्धं स्वभावतः ॥ ४ ॥
एवं समस्तजन्तूनामनुभूतिर्व्यवस्थिता ।
भ्रान्ता अपि न कुर्वन्ति विवादं चात्र सत्तमाः ॥ ५ ॥
एवं व्यवस्थिते ह्यर्थे सति बुद्धिमतां वराः ।
संसारविषवृक्षस्य मूलच्छेदनकाङ्क्षिभिः ॥ ६ ॥
यत्र यत्रेदमित्येषा बुद्धिर्दृष्टा स्वभावतः ।
तत्र तत्र त्वनात्मत्वं विज्ञातव्यं विचक्षणैः ॥ ७ ॥
यत्र यत्राहमित्येषा बुद्धिर्दृष्टा स्वभावतः ।
तत्र तत्र तथात्मत्वं विज्ञातव्यं मनीषिभिः ॥ ८ ॥
शरीरे दृश्यते सर्वैरिदंबुद्धिस्तथैव च ।
अहंबुद्धिश्च विप्रेन्द्रास्ततस्ते भिन्नगोचरे ॥ ९ ॥
शरीरालम्बना बुद्धिरिदमित्यास्तिकोत्तमाः ।
चिदात्मालम्बना साक्षादहंबुद्धिर्न संशयः ॥ १० ॥
इदमर्थे शरीरे तु याऽहमित्युदिता मतिः ।
सा महाभ्रान्तिरेव स्यादतस्मिंस्तद्ग्रहत्वतः ॥ ११ ॥

---

॥ ३—५ ॥ एवं व्यवस्थित इति । इदमहंबुद्ध्योरनात्मात्मविषयत्व एवं लोकत एव सिद्धे सति मोक्षार्थिभिः सर्वत्रेदंकारास्पदेऽनात्मत्वं ज्ञातव्यमहंकारास्पदेऽप्यात्मत्वं ज्ञातव्यम् ॥ ६—८ ॥ ननु क्वचिद्देहेन्द्रियादौ ममेदं शरीरमहं मनुष्य इत्येवं प्रत्यया दृश्यन्ते तत्र कथमित्याशङ्क्याऽऽह—शरीर इति । इदमहंबुद्ध्योरुभयोर्नियतपराकप्रत्यगर्थविषयत्वेनैकत्वासंभवात्ते बुद्धी भिन्नविषये कर्तव्ये ॥ ९ ॥ तत्र साक्षिचिदात्मनो विविक्तं यत्साक्ष्यं देहेन्द्रियादिकं तदालम्बनेदंबुद्धिः स्यादनुभवतोऽनिदंरूपत्वेऽपि चिद्भास्यत्वलक्षणयोगेन यौक्तिकाविवेकद्वाह्यद्रव्यवदिदंकारास्पदत्वात् । अहंबुद्धिस्तु देहेन्द्रियादेः साक्षी चिदात्मा तदालम्बना ॥ १० ॥

अचिद्रूपमहंबुद्धेः पिण्डं नाऽऽलम्बनं भवेत् ।
मृत्पिण्डादिष्वदृष्टत्वात्ततोऽनात्मैव विग्रहः ॥ १२ ॥
अचित्त्वादिन्द्रियाणां च प्राणस्य मनसस्तथा ।
आलम्बनत्वं नास्त्येव बुद्धेश्चाहंमतिं प्रति ॥ १३ ॥
बुद्धेरचित्त्वं संग्राह्यं दृष्टत्वाज्जन्मनाशयोः ।
अचिद्रूपस्य कुड्यादेः खलु जन्मविनाशनम् ॥ १४ ॥
अहंकारस्य चाचित्त्वाच्चित्तस्य च तथैव च ।
आलम्बनत्वं नास्त्येव सदाऽहंप्रत्ययं प्रति ॥ १५ ॥

---

अहं मनुष्यः स्थूलोऽहं कृशोऽहमिति मनुष्यत्वादिधर्मयुक्तदेहेन्द्रियादिसामानाधिकरण्यादहंप्रत्ययस्य तद्विषयत्वमनुभवसिद्धमिति चेत्तत्राऽऽह—इदमर्थ इति । चिद्भास्यत्वलक्षणयोगान्निश्चितेदमर्थे शरीरादौ जायमानोऽहंप्रत्ययः स्फटिके रक्तिमबुद्धिवद्भ्रान्तिरेव स्यात् । 'अतस्मिंस्तद्बुद्धिर्विपर्ययः' इति तल्लक्षणयोगादित्यर्थः ॥ ११ ॥ भूतकार्यत्वादपि देहादिर्नाहंबुद्धेर्विषय इत्याह—अचिद्रूपमिति । अन्नपरिणामरूपत्वाज्जडं पिण्डं स्थूलशरीरं तावदहंप्रत्ययस्य नाऽऽलम्बनं तदालम्बनत्वस्य मृत्पिण्डादौ जडेऽदृष्टत्वात्ततोऽहंबुद्ध्यनालम्बनत्वात्स्थूलदेहोऽनात्मा ॥ १२ ॥ इन्द्रियादीनामपि तदनालम्बनत्वं प्रतिपादयति—अचित्त्वादिति । स्थूलदेहवदिन्द्रियादीनामप्यचिद्रूपत्वसामान्यादहंप्रत्ययानालम्बनत्वम् ॥ १३ ॥ नन्विन्द्रियादीनां चिद्भास्यत्वादस्त्वहंबुद्ध्यविषयत्वम् । बुद्धिस्तु चिद्रूपैवेति तस्यास्तदालम्बनत्वं युक्तमित्यत आह—बुद्धेरिति । उत्पत्तिविनाशौ हि जडधर्मौ । तद्योगाद्बुद्धेरप्यवश्यमचिद्रूपत्वमभ्युपेतव्यम् । अयं भावः । विमता बुद्धिरचिद्रूपोत्पत्तिविनाशधर्मवत्त्वाद्घटादिवदिति । व्याप्तिं दर्शयति—अचिद्रूपस्येति ॥ १४ ॥ एवं मनोबुद्ध्योरचित्त्वेनानात्मत्वं प्रतिपाद्याहंकारचित्तयोरेतत्प्रतिपादयति—अहंकारस्येति । एतयोरपि सत्त्वपरिणामरूपान्तःकरणकार्यतया चिद्भास्यत्वेन जडत्वाद्घटादिवदहंप्रत्ययालम्बन-

सर्वप्रत्ययरूपेण सदाऽहंकार एव हि ।
निवर्ततेऽतोऽहंकारस्त्वनात्मैव शरीरवत् ॥ १६ ॥
परिणामस्वभावस्य क्षीरादेर्द्विजपुङ्गवाः ।
अचेतनत्वं लोकेऽस्मिन्प्रसिद्धं खलु संततम् ॥ १७ ॥
तस्माच्चिद्रूप एवाऽऽत्माऽहंबुद्धेरर्थ आस्तिकाः ।
अचिद्रूपमिदंबुद्धेरनात्मैवार्थ ईरितः ॥ १८ ॥
सत्यपि प्रत्ययार्थत्वे प्रत्यगात्मा स्वयंप्रभः ।
वृत्त्यधीनतया नैव विभाति घटकुड्यवत् ॥ १९ ॥
स्वच्छवृत्तिमनुप्राप्य वृत्तेः साक्षितया स्थितः ।
वृत्त्या निवर्त्यमज्ञानं ग्रसते तेन तेजसा ॥ २० ॥

---

त्वमित्यर्थः ॥ १५ ॥ नन्वहंप्रत्ययस्याहंकारानालम्बनत्वं व्याहतमित्यत आह—सर्वप्रत्ययेति । अहंबुद्धिस्तावदात्मैकविषयेत्युक्तम् । अहंकारस्तावदात्मा न भवति । अहं सुखी दुःखीत्येवं सर्वप्रत्ययरूपेण विवर्तमानत्वात्तस्यापि विकारित्वेन शरीरवदनात्मत्वमेव युक्तम् । किंच दध्याकारपरिणामिनः क्षीरादेरनित्यत्वमचेतनत्वं च लोकप्रसिद्धत्वात्सर्वप्रत्ययात्मना परिणममानस्याहंकारस्य तथाविधमचेतनत्वं को निवारयेत् ॥१६॥१७॥ एवमहंबुद्ध्यालम्बनत्वेन प्रसक्तानां देहेन्द्रियादीनां तदालम्बनत्वप्रतिषेधे सति पारिशेष्याच्चिन्मात्रालम्बनत्वं तस्य सिद्धमिति निगमयति—तस्मादिति । अहमिति प्रत्यगर्थविषयाया बुद्धेरुक्तरीत्या देहेन्द्रियादीनां चिद्भास्यत्वेन घटादिवत्परागर्थत्वात्प्रत्यग्भूतः साक्षी चिन्मात्ररूप एवाऽऽत्मा विषयो नाचिद्रूपं जडं देहेन्द्रियादिकम् । इदंबुद्धेश्चानात्मैव विषय इति न तयोः क्वापि सांकर्यमित्यर्थः ॥१८॥ यदि चिन्मात्ररूप आत्माऽहंबुद्धिविषयस्तर्हि तस्य स्वप्रकाशत्वभङ्ग इत्यत आह—सत्यपीति । सर्वान्तरस्य प्रत्यगात्मनोऽहंप्रत्ययविषयत्वे सत्यप्यसौ स्वयंप्रकाश एव भवति । ननु बुद्धिवृत्तिविषयत्वं स्वप्रकाशत्वं च परस्परविरुद्धमित्यत आह—वृत्त्यधीनेति ।

अनुप्रविष्टचैतन्यसंबन्धात् वृत्तिरात्मिकाः।
जडरूपं घटाद्यर्थं भासयत्यात्मरूपवत् ॥ २१ ॥
अतोऽहंप्रत्ययार्थेऽपि नानात्मा स्याद्घटादिवत्।
स्वयंप्रकाशरूपेण साक्षादात्मैव केवलम् ॥ २२ ॥
यत्संबन्धादहंवृत्तिः प्रत्ययत्वेन भासते।
स कथं प्रत्ययाधीनप्रकाशः स्यात्स्वयंप्रभः ॥ २३ ॥

---

सर्वप्रत्यक्चिदात्मनः सत्यपि बुद्धिवृत्तिव्याप्यत्वे घटकुड्यादिवत्स्फुरणं न तदधीनम्। किंतु स्वच्छां निर्मलां बुद्धिवृत्तिमनुव्याप्य तस्या वृत्तेर्भासकसाक्षिचिद्रूपेणायमवस्थितः स्वयं प्रकाशते। घटकुड्यादिकं तु जडत्वात्स्वगोचरवृत्त्यनुप्रविष्टचैतन्येनापि व्याप्य वर्तत इति पराधीनप्रकाशमित्यर्थः। नन्वहमर्थश्चिदात्मा स्वयंप्रकाशमानश्चेदहमाकारवृत्तिस्तर्हि किमर्थेत्यत आह—वृत्त्येति। आत्मस्वरूपावरणभूतं यदज्ञानं तदात्मविषयवृत्त्यैव निवर्तनीयम्। अतोऽज्ञाननिवृत्तौ बुद्धिवृत्तेरुपयोगस्तत्र चेत्यमानमज्ञानं स्वस्वरूपेऽध्यस्तत्वादात्मा स्वेनैव चित्प्रकाशेन ग्रसते तदज्ञाननिवृत्तिरपि चिन्मात्ररूपेणावशिष्यत इत्यर्थः ॥ १९ ॥ २० ॥ बुद्धिवृत्तेर्घटादिविषयप्रकाशजननसामर्थ्यवदात्मविषयप्रकाशजननसामर्थ्यमपि किं न स्यादित्यत आह—अनुप्रविष्टेत्यादिना। सत्त्वपरिणामरूपत्वेन निर्मला बुद्धिवृत्तिः स्वात्मन्यनुप्रविष्टचैतन्यसंबन्धबलात्सवितृप्रतिबिम्बयुक्तादर्शवज्जडं घटादिविषयजातमापरोक्ष्येण भासयति। आत्मा तु स्वप्रकाशचिद्रूपत्वात्स्वरूपप्रकाशेनैव केवलं भासते ॥ २१ ॥ २२ ॥ एतदुपपादयति—यदिति। यस्य चित्प्रकाशात्मनः संबन्धबलादहमर्थविषया वृत्तिः प्रतीतिकरणत्वेन भासते स चिदात्मा कथं प्रत्ययाधीनप्रकाशः स्यात्। प्रतीयतेऽनेनेति प्रत्ययो बुद्धिः। स च साक्षिचैतन्येन प्रकाश्यमानः कथं स्वसाक्षिणं प्रकाशयितुं शक्नुयात्। अतो बुद्धिवृत्तेरात्मविषयप्रकाशजननसामर्थ्याभावात्साक्षिभूतश्चिदात्मा स्वयंप्रकाशमान एवेत्यर्थः ॥ २३ ॥ नन्वहं

अहंवृत्तिः स्वतःसिद्धचैतन्येद्धाऽवभासते ।
तत्संबन्धादहंकारः प्रत्ययीव प्रकाशते ॥ २४ ॥
आत्माऽहंप्रत्ययाकारसंबन्धभ्रान्तिमात्रतः ।
कर्ता भोक्ता सुखी दुःखी ज्ञातेति प्रतिभासते ॥ २५ ॥
वस्तुतस्तस्य नास्त्येव चिन्मात्रादपरं वपुः ।
चिद्रूपमेव स्वाज्ञानादन्यथा प्रतिभासते ॥ २६ ॥
सर्वदेहेष्वहंरूपः प्रत्ययो यः प्रकाशते ।
तस्य चिद्रूप एवाऽऽत्मा साक्षादर्थो न चापरः ॥ २७ ॥

---

जानामीत्यहंकारस्य ज्ञातृत्वमवसीयते कुतस्तस्यानात्मत्वमित्यत आह—अहंवृत्तिरिति । स्वतःसिद्धं स्वप्रकाशं यत्साक्षिचैतन्यं तेनेद्धा तत्तादात्म्याध्यासेन प्रदीप्ताऽहंवृत्तिरवभासते । तच्चैतन्यप्रकाशसंबन्धवशादेवानात्मभूतोऽप्यहंकारः प्रत्ययीव प्रत्ययाः शब्दादिविषयज्ञानानि तद्युक्तो ज्ञातेव प्रकाशते । परमार्थतस्तु प्रत्ययी चिदात्मैव ॥ २४ ॥ नन्वात्मा प्रत्ययी चेत्तस्य ज्ञानक्रियाकर्तृत्वादिप्रसङ्गात्तस्य चिन्मात्ररूपता न सिध्येदित्यत आह—आत्मेति । कर्तृत्वभोक्तृत्वादिधर्मवदहंकारतादात्म्यसंबन्धवशाच्चिदात्मनि तद्धर्माध्यारोपेण कर्तृत्वादिप्रतीतिः ॥ २५ ॥ परमार्थतस्तु चिन्मात्रादन्यत्तस्य स्वरूपं न भवतीत्यर्थः । एतदुक्तं भवति । अहंकारचैतन्ययोः परस्परतादर्थ्याभिसंबन्धाच्चिदात्मधर्मः प्रत्ययित्वमहंकारधर्मत्वेन भासते । अहंकारधर्माः कर्तृत्वभोक्तृत्वादयश्चिदात्मधर्मत्वेन प्रतिभासन्ते । तयोर्विवेके तु चिन्मात्रमेवाऽऽत्मस्वरूपं परिशिष्यत इति । अन्यथा प्रतिभाने कारणमाह—चिद्रूपमेवेति । विशुद्धचैतन्यमेवाऽऽत्मतत्त्वं स्वस्वरूपाज्ञानादन्यथा प्रकारान्तरेण कर्ता भोक्ता सुखी दुःखीत्यादिबहुप्रकारेण भासते ॥ २६ ॥ सर्वदेहेष्विति । सर्वप्राणिशरीरेष्वहमिति प्रत्ययोऽनुवृत्तः प्रतीयते । तस्य च केनचिदनुगतेन तादृशेनार्थेन भवितव्यम् । तादृशस्त्वर्थश्चिदात्मैव नापरः कश्चिदस्ति । चिदात्माति-

गौरिति प्रत्ययस्यार्थो यथा गोत्वं तु केवलम् ।
तथाऽहंप्रत्ययस्यार्थश्चिद्रूपात्मैव केवलम् ॥ २८ ॥
व्यक्तिसंबन्धरूपेण गोत्वं भिन्नं प्रतीयते ।
चिदहंकारसंबन्धाद्भेदेन प्रतिभाति च ॥ २९ ॥
यथैवैकोऽपि गोशब्दो भिन्नार्थो व्यक्तिभेदतः ।
तथैवैकोऽप्यहंशब्दो भिन्नार्थो व्यक्तिभेदतः ॥ ३० ॥
यथा प्रतीत्या गोव्यक्तिर्गोशब्दार्थो न तत्त्वतः ।
तत्त्वतो गोत्वमेवार्थः साक्षाद्वेदविदां वराः ॥ ३१ ॥

---

रिक्तस्य सर्वस्य व्यावृत्तस्वभावत्वात् ॥ २७ ॥ उक्तमर्थं सदृष्टान्तमुपपादयति—गौरिति । यथा शाबलेयादिष्वनुगतस्य गौरिति प्रत्ययस्य गोत्वमेवार्थो न तु व्यावृत्तास्तद्व्यक्तयः । तथा च सर्वप्राणिशरीरेष्वनुगतस्याहंप्रत्ययस्यानुगतचिदात्मैव विषयो न तु तच्छरीरादिकमित्यर्थः ॥ २८ ॥ नन्वहंप्रत्ययस्य भिन्नविषयत्वमित्यत आह—व्यक्तीति । यथैकमपि गोत्वं तत्तच्छाबलेयादिव्यक्तिभिन्नाकारेण भिन्नं प्रतीयते । एवमेकैव चित्तदहंकारवशाद्भेदेन प्रतिभाति न तु चित्स्वरूपपर्यालोचने भेद उपलभ्यते ॥ २९ ॥ एवं प्रत्ययोपाधावहमर्थस्यैक्यमुपपाद्य शब्दार्थोपाधावपि तत्प्रतिपादयति—यथैवैकोऽपीति । यथैवैकोऽपि गोशब्दः स्वाभिधेयगोत्वजातिव्यञ्जकव्यक्तिभेदवशाद्भिन्नार्थो भवति तथैवैकोऽप्यहंशब्दः प्रतिशरीरं स्वाभिधेयचिद्व्यञ्जकाहंकारव्यक्तिभेदेन भिन्नार्थो न विरुध्यते ॥ ३० ॥ तत्र च यथा गोशब्दस्य व्यक्तिः प्रातीतिकोऽर्थो न तात्त्विकः । अनुगतस्यैकस्य गोशब्दस्य व्यावृत्तासु गोव्यक्तिषु संगतिग्रहणासंभवात् । परमार्थतस्तु सर्वासु गोव्यक्तिष्वनुगतं गोत्वमेव तस्यार्थः । व्यक्तिष्वनुगतयोस्तयोर्वाच्यवाचकभावेन संगतिग्रहणासंभवात् । एवमेव सर्वप्राणिष्वनुगतस्याहंशब्दस्याननुगताहंकारार्थत्वं प्रातीतिकम् । यस्तु प्रत्यक्चिदात्मा सर्वत्रानुगतः स एव तस्यानुगतस्याहंशब्दस्य मुख्योऽर्थः । तस्यानुगतिमभि-

तथा प्रतीत्याऽहंकारोऽहंशब्दार्थो न तत्त्वतः ।
तत्त्वतः प्रत्यगात्मैव स एवाखिलसाधकः ॥ ३२ ॥
एकत्वेऽपि पृथक्त्वेन व्यपदेशोऽपि युज्यते ।
अन्तःकरणभेदेन साक्षिणः प्रत्यगात्मनः ॥ ३३ ॥
रुद्रविष्णुप्रजानाथप्रमुखाः सर्वचेतनाः ।
चिन्मात्रात्मन्यहंशब्दं प्रयुञ्जन्ते हि तत्त्वतः ॥ ३४ ॥
सुषुप्तोऽस्मीति सर्वोऽयं सुषुप्तादुत्थितो जनः ।
सुषुप्तिकालीनस्वात्मन्यहंशब्दं द्विजोत्तमाः ॥ ३५ ॥
प्रयुङ्क्ते तत्र देहादिविशेषाकारभासनम् ।
न हि केवलचैतन्यं सुषुप्तेः साधकं स्वतः ॥ ३६ ॥
प्रतिभाति ततस्तस्मिंश्चिन्मात्रे प्रत्यगात्मनि ।
अहंशब्दप्रवृत्तिः स्यान्न तु सोपाधिकात्मनि ॥ ३७ ॥

---

प्रेत्य विशिनष्टि—अखिलमिति । यतोऽयं चिदात्माऽखिलव्यवहारसाधकोऽतः सर्वप्राणिषु तत्तद्व्यवहारसाक्षितयाऽऽकाशवदनुगतो वर्तत इत्यर्थः ॥ ३१ ॥ ३२ ॥ एकत्वेऽपीति । एवमहमर्थस्य चिदात्मन एकत्वेऽप्यहं देवदत्तोऽहं यज्ञदत्त इत्यादिभेदव्यपदेशोऽपि न विरुध्यते प्रतिशरीरमन्तःकरणभेदेन तत्साक्षिणश्चिदात्मनोऽपि तथात्वप्रतीतेरित्यर्थः ॥ ३३ ॥ इत्थं स्वप्रतिपादितेऽर्थे रुद्रादीनामपि व्यवहारं संवादयति—रुद्रेति ॥ ३४ ॥ ननु ते सर्वेऽहंकारसहिते चैतन्येऽहंशब्दं प्रयुञ्जते चिदात्मन इवाहंकारस्यापि तच्छब्दान्वयव्यतिरेकानुविधायित्वादित्याशङ्क्य केवलव्यतिरेकलाभाच्चिदात्मैवाहंशब्दार्थ इति प्रतिपादयति—सुषुप्तोऽस्मीत्यादिना । एतावन्तं कालमहं सुषुप्तोऽस्मीति स्वापादुत्थाय परामृशन्स्वापकालीनात्मविषयेऽहंशब्दं प्रयुङ्क्ते न च तस्यामवस्थायामहंकारोऽपि तस्यापि स्वकारणे लीनत्वेन तदानीं सकलविशेषप्रतिभासाभावात्तत्प्रतिभाने च सुषुप्तिभङ्गप्रसङ्गात् । अतस्तस्यामवस्थायां सुषुप्तेः प्रकाशकाहंकाराविशि-

यथाऽयो दहतीत्युक्ते वह्निर्दहति केवलम् ।
नायस्तद्वदहंशब्दश्चैतन्यस्यैव वाचकः ॥ ३८ ॥
प्रतीत्या वह्निसंबन्धाद्यथाऽयो दाहकं तथा ।
चित्संबन्धादहंकारोऽहंशब्दार्थः प्रकीर्तितः ॥ ३९ ॥
चैतन्येद्धाहमः स्पर्शाद्देहादौ भ्रान्तचेतसाम् ।
अहंशब्दप्रयोगः स्यात्तथाऽहंप्रत्ययोऽपि च ॥ ४० ॥
इत्थं विवेकतः साक्ष्यं देहादिप्राणपूर्वकम् ।
अन्तःकरणमात्मानं विभज्य स्वात्मनः पृथक् ॥ ४१ ॥
सर्वसाक्षिणमात्मानं स्वयंज्योतिःस्वलक्षणम् ।
सत्यमानन्दमद्वैतमहमर्थं विचिन्तयेत् ॥ ४२ ॥

---

ष्टात्मनीत्यर्थः । एवं सुषुप्त्यवस्थायामात्मनि प्रयुज्यमानस्याहंशब्दस्य प्रत्यगर्थवाचिनः सर्वत्रप्रत्यग्भूतचैतन्यमेवार्थः । न त्वहंकारस्तस्य तदवभास्यत्वेन परागर्थत्वात् ॥ ३५—३८ ॥ अहंकाराभिधायकत्वं न तु तस्य प्रातीतिकमिति सदृष्टान्तमाह—प्रतीत्येति । अग्निसंयोगवशात्स्वभावतोऽनुष्णस्पर्शस्याप्ययसो दाहकत्वं यथा प्रतीतिमात्रसिद्धमेवं चित्संबन्धबलादहंकारोऽपि प्रतीतितोऽहंशब्दार्थः । परमार्थतस्तु यथाऽग्नेरेव दाहकत्वमेवं चैतन्यस्यैवाहंशब्दार्थतेत्यर्थः ॥ ३९ ॥ कथं तर्ह्यहं मनुष्य इति देहादावहंशब्दप्रयोग इति तत्राह—चैतन्येति । स्वप्रकाशचैतन्यतादात्म्यापन्नो योऽहंकारस्तस्य स्पर्शादापादमस्तकव्यापनाद्देहादावहंशब्दप्रयोगप्रत्ययावन्यतोऽन्यदीययोस्तयोरन्यत्र प्रयोगो भ्रान्तिकृत इत्यर्थः । ॥ ४० ॥ प्रतिपादितमर्थं निगमयन्नात्मस्वरूपमवधारयति—इत्थमिति । इत्थमनेनोक्तप्रकारेण साक्ष्यं देहेन्द्रियादिकमहंकर्त्रात्मानं यौक्तिकविवेकेन स्वात्मनः सकाशात्पृथग्विभज्य देहेन्द्रियादिसर्वसाक्षिणं स्वप्रकाशचिद्रूपमुक्तरीत्याऽहंशब्दप्रतिपाद्यमात्मानं सत्यादिलक्षणं ब्रह्म चिन्तयेत् ॥ ४१ ॥ ४२ ॥ अहमर्थस्यात्मनो ब्रह्मस्वरूपत्वं संवादेन द्रढयति—रुद्रेति

रुद्रविष्णुप्रजानाथप्रमुखाः सर्वचेतनाः ।
अहमेव परं ब्रह्मेत्याहुरात्मानमेव हि ॥ ४३ ॥
ते तु चिन्मात्रमद्वैतमहमर्थतया भृशम् ।
अङ्गीकृत्याहमद्वैतं ब्रह्मेत्याहुर्न देहतः ॥ ४४ ॥
चिन्मात्रं सर्वगं सत्यं संपूर्णसुखमद्वयम् ।
साक्षाद्ब्रह्मैव नैवान्यदिति तत्त्वविदां स्थितिः ॥ ४५ ॥
शास्त्रं सत्यचिदानन्दमनन्तं वस्तु केवलम् ।
शुद्धं ब्रह्मेति सश्रद्धं प्राह वेदविदां वराः ॥ ४६ ॥
प्रत्यगात्माऽयमद्वंद्वः साक्षी सर्वस्य सर्वदा ।
सत्यज्ञानसुखानन्तलक्षणः सर्वदाऽनघाः ॥ ४७ ॥
अतोऽयं प्रत्यगात्मैव स्वानुभूत्येकगोचरः ।
शास्त्रसिद्धं परं ब्रह्म नापरं परमार्थतः ॥ ४८ ॥
एवं तर्कप्रमाणाभ्यामाचार्योक्त्या च मानवः ।
अविज्ञाय शिवात्मैक्यं संसारे पतति भ्रमात् ॥ ४९ ॥

---

॥ ४३ ॥ अहमेव परं ब्रह्मेति रुद्रविष्ण्वादिव्यवहारेऽपि चिन्मात्रस्यैवाहमर्थतामाह—ते त्विति । ते रुद्रविष्ण्वादयो निरस्तसमस्तोपाधिकं साक्षिचिन्मात्रमेवाहमर्थतया स्वीकृत्याहं ब्रह्मेति ब्रह्मतादात्म्येन व्यवहरन्ति न तु देहादिविशिष्टम् । तस्य संसार्यात्मनोऽसङ्गब्रह्मतादात्म्यानुपपत्तेरित्यर्थः ॥ ४४ ॥ ननु चिन्मात्रस्वरूपस्यापि साक्षिणः कथं ब्रह्मरूपतेति तत्राह—चिन्मात्रमिति । यद्धि चिन्मात्रं तदेव साक्षात्सत्यादिलक्षणं परं ब्रह्म न तद्व्यतिरिक्तमिति परमार्थविदां निर्णयः ॥ ४५ ॥ शास्त्रस्यापीदृगर्थपरत्वमाह—शास्त्रमिति ॥ 'सत्यं ज्ञानमनन्तं ब्रह्म' इत्यादि शास्त्रं ब्रह्मणः सत्यज्ञानानन्तानन्दैकरसत्वं तात्पर्येण प्रतिपादयति । अयमपि प्रत्यगात्माऽद्वंद्वः सांसारिकसुखदुःखादिद्वंद्वरहितस्तस्य सर्वस्य सर्वदा साक्षी साक्षाद्द्रष्टाऽत एव सत्यज्ञानादिलक्षणः ॥४६॥४७॥ एवं तत्त्वंपदार्थौ

शास्त्राचार्योपदेशेन तर्कैः शास्त्रानुसारिभिः ।
सर्वसाक्षितयाऽऽत्मानं सम्यङ्निश्चित्य सुस्थिरः ॥ ५० ॥
स्वात्मनोऽन्यतया भातं समस्तमविशेषतः ।
स्वात्ममात्रतया बुद्ध्वा पुनः स्वात्मानमद्वयम् ॥ ५१ ॥
शुद्धं ब्रह्मेति निश्चित्य स्वयं स्वानुभवेन च ।
निश्चयं च स्वचिन्मात्रे विलाप्याविक्रियेऽद्वये ॥ ५२ ॥
विलापनं च चिद्रूपं बुद्ध्वा केवलरूपतः ।
स्वयं तिष्ठेदयं साक्षाद्ब्रह्मवित्प्रवरो मुनिः ॥ ५३ ॥
ईदृशी परमा निष्ठा श्रौती स्वानुभवात्मिका ।
देशिकालोकनेनैव केवलेन हि सिध्यति ॥ ५४ ॥
देशिकालोकनं चापि प्रसादात्पारमेश्वरात् ।
सिध्यत्ययत्नतः प्राज्ञाः सत्यमेव मयोदितम् ॥ ५५ ॥
सत्यं सत्यं पुनः सत्यमुद्धृत्य भुजमुच्यते ।
प्रसादादेव सर्वेषां सर्वसिद्धिर्महेशितुः ॥ ५६ ॥
प्रसादे शांभवे सिद्धे सर्वं शंभुतया स्वतः ।
विभाति नान्यथा विप्राः सत्यमेव मयोदितम् ॥ ५७ ॥

---

दर्शयित्वा तदेकत्वलक्षणं वाक्यार्थमाह—अतोऽयमिति ॥ ४८ ॥ ॥ ४९ ॥ प्रत्यगात्मनः परशिवस्वरूपज्ञाननिष्ठायां क्रममाह—शास्त्रेत्यादिना । प्रथमं गुरुशास्त्रोपदेशेनाऽऽत्मस्वरूपं ज्ञात्वा पुनः शास्त्रानुसारिभिर्न्यायैर्देहेन्द्रियादिसाक्षितयाऽवस्थितं चिन्मात्रस्वरूपमात्मानं निश्चित्य स्वात्मनोऽन्यत्वेन प्रतिभातं सकलं साक्ष्यं जगत्स्वाविद्याविलसितत्वेन स्वात्ममात्रतया बुद्ध्वा तथाविधं स्वात्मानमद्वितीयं परं ब्रह्मेति प्रत्यग्ब्रह्मणोरैक्यं साक्षात्कृत्य तं च साक्षात्कारं स्वरूपभूते चिन्मात्रे कतकरजोन्यायेन विलाप्य विलापनक्रियां चाधिष्ठानचिद्व्यतिरेकेण बुद्ध्वा केवलं चिदानन्दैकरसरूपेण स्वयं तिष्ठतीत्यर्थः ॥ ५०—५३ ॥ उक्तब्र-

यदा शंभुतया सर्वं विभाति स्वत एव तु ।
तदा हि शांभवः साक्षात्प्रसादः सत्यमीरितम् ॥ ५८ ॥
शिवादन्यतया किंचिदपि भाति यदा द्विजाः ।
तदा न शांकरो बोधः संजात इति मे मतिः ॥ ५९ ॥
शिवादन्यतया सर्वं प्रतीतमपि पण्डितः ।
तत्त्वदृष्ट्या शिवं सर्वं सुस्थिरं परिपश्यति ॥ ६० ॥
शिवाकारेण वा नित्यं प्रपञ्चाकारतोऽपि वा ।
जीवाकारेण वा भातं यत्तद्ब्रह्म विचिन्तयेत् ॥ ६१ ॥
शंभुरेव सदा भाति सर्वाकारेण नापरः ।
इति विज्ञानसंपन्नः शांकरज्ञानिनां वरः ॥ ६२ ॥
शंभुरूपतया सर्वं यस्य भाति स्वभावतः ।
न तस्य वैदिकं किंचित्तान्त्रिकं चास्ति लौकिकम् ॥ ६३ ॥
यथाभातस्वरूपेण शिवं सर्वं विचिन्तयन् ।
योगी चरति लोकानामुपकाराय नान्यथा ॥ ६४ ॥
स्वस्वरूपातिरेकेण निषिद्धं विहितं तु वा ।
न पश्यति महायोगी भाति स्वात्मतयाऽखिलम् ॥ ६५ ॥
चण्डालगेहे विप्राणां गृहे वा परमार्थवित् ।
भक्ष्यभोज्यादिवैषम्यं न किंचिदपि पश्यति ॥ ६६ ॥

---

ह्यात्मनिष्ठायां साधनमाह—ईदृशीत्यादिना ॥ ५४—५९ ॥ तत्त्वदृष्ट्येति । व्यवहारदृष्ट्यैव हि जगत्प्रतिभासः । तत्त्वदृष्ट्या तु परशिवस्वरूपेऽध्यस्तस्य सर्वस्य तदनन्यत्वाच्छिवात्मकमेव सर्वं जगत्सुदृढं परिपश्यतीत्यर्थः ॥ ६० ॥ शिवाकारेणेति । भोगप्रदभोग्यभोक्त्रात्मना यत त्रिविधं जगद्भाति तत्सर्वं भानमात्ररूपं परं ब्रह्म विचिन्तयेत् । यतस्तद्भानरूपे ब्रह्मण्यध्यस्ततयैव भातीत्यर्थः ॥ ६१ ॥ ६२ ॥ एवं प्रतिपन्नस्य जीवन्मुक्तस्य स्थितिमाह—शंभुरूपतयेत्यादिना । न तस्य वैदिकमिति ।

यथेष्टं वर्तते योगी शिवं सर्वं विचिन्तयन् ।
तादृशो हि महायोगी को वा तस्य निवारकः ॥ ६७ ॥
बहुनोक्तेन किं साक्षाद्देशिकस्य निरीक्षणात् ।
प्रसादादेव रुद्रस्य परशक्तेस्तथैव च ॥ ६८ ॥
श्रुतिभक्तिबलात्पुण्यपरिपाकबलादपि ।
शिवरूपतया सर्वं स्वभावादेव पश्यति ॥ ६९ ॥
शिवः सर्वमिति ज्ञानं शांकरं शोकमोहनुत् ।
अयमेव हि वेदार्थो नापरः सत्यमीरितम् ॥ ७० ॥
श्रुतौ भक्तिर्गुरौ भक्तिः शिवे भक्तिश्च देहिनाम् ।
साधनं सत्यविद्यायाः सत्यमेव मयोदितम् ॥ ७१ ॥
सोपानक्रमतो लब्धं विज्ञानं यस्य सुस्थिरम् ।
तस्य मुक्तिः परा सिद्धा सत्यमेव मयोदितम् ॥ ७२ ॥
नित्यमुक्तस्य संसारो भ्रान्तिसिद्धः सदा खलु ।
तस्माज्ज्ञानेन नाशः स्यात्संसारस्य न कर्मणा ॥ ७३ ॥
ज्ञानलाभाय वेदोक्तप्रकारेण समाहितः ।
महाकारुणिकं साक्षाद्गुरुमेव समाश्रयेत् ॥ ७४ ॥

इति श्रीसूतसंहितायां यज्ञवैभवखण्डस्योपरिभागे सूतगीतायां आत्मस्वरूपकथनं नाम पञ्चमोऽध्यायः ॥ ५ ॥

---

क्रियाकारहेतूनां ब्राह्मण्यादीनामनात्मतया विविक्तत्वादित्यर्थः ॥ ६३—७१ ॥ सोपानक्रमत इति । शास्त्राचार्योपदेशेत्यादिना प्रागुक्तेन क्रमेणेत्यर्थः ॥ ७२ ॥ ननु ज्ञानमात्रात्कथं मुक्तिसिद्धिरिति तत्राऽऽह—नित्यमुक्तस्येति । आत्मा हि नित्यमुक्तस्वभावः 'असङ्गो ह्ययं पुरुषः' इति श्रुतेः । तस्य च संसारो भ्रान्तिसिद्ध एवेति वक्तव्यम् । सम्यग्ज्ञानमात्रस्वरूपयाथात्म्यज्ञानेन भ्रमकृतसंसारनिवृत्तौ सत्यां स्वभावभूता मुक्तिः स्वत एव सिध्यतीति ज्ञानमेव तत्प्राप्तौ साधनं न कर्मेत्यर्थः ॥ ७३ ॥ ७४ ॥

## षष्ठोऽध्यायः ।
### ६. सर्वशास्त्रार्थसंग्रहवर्णनम् ।

सूत उवाच—

वक्ष्यामि परमं गुह्यं सर्वशास्त्रार्थसंग्रहम् ।
यं विदित्वा द्विजा मर्त्यो न पुनर्जायते भुवि ॥ १ ॥
साक्षात्परतरं तत्त्वं सच्चिदानन्दलक्षणम् ।
सर्वेषां नः सदा साक्षादात्मभूतमपि स्वतः ॥ २ ॥
दुर्दर्शमेव सूक्ष्मत्वाद्देवानां महतामपि ।
रुद्रः स्वात्मतया भातं तत्सदा परिपश्यति ॥ ३ ॥
विष्णुः कदाचित्तत्तत्त्वं कथंचित्परिपश्यति ।
तथा कथंचिद्ब्रह्माऽपि कदाचित्परिपश्यति ॥ ४ ॥

---

इति श्रीसूतसंहितातात्पर्यदीपिकायां यज्ञवैभवखण्डस्योपरिभागे सूतगीतायां आत्मस्वरूपकथनं नाम पञ्चमोऽध्यायः ॥ ५ ॥

उक्तविधं परशिवस्वरूपात्मज्ञानं तदनुग्रहव्यतिरेकेण न सिध्यतीति तत्सिद्ध्युपायभूतं मूर्तिध्यानं वक्तुमुपक्रमते—वक्ष्यामीति ॥ १ ॥ साक्षात्परतरमिति । यत्सच्चिदानन्दैकरसं परशिवस्वरूपमेतदेव हि मुख्यं परतरमतिशयेन परं तत्त्वम् । मायायास्तु स्वकार्यापेक्षयैव परत्वं ब्रह्मापेक्षया त्वपरत्वमेवेति परत्वं नास्ति । ईदृग्विधं ब्रह्मैव नोऽस्माकं सर्वेषां सर्वदाऽऽपरोक्ष्येण स्वभावत आत्मभूतमपि निर्विशेषत्वेन सूक्ष्मत्वात्स्थूलदृष्टिभिर्दुर्दर्शं द्रष्टुं दुःशकम् । अतस्तत्साक्षात्कारो यत्नसाध्य इत्यर्थः । रुद्रः स्वात्मतयेत्यादि । त्रिमूर्तीनां मध्ये रुद्रस्तु रजस्तमोभ्यामसंस्पृष्टविशुद्धसत्त्वोपाधिकत्वाज्ज्ञानोत्कर्षबलेन स्वात्मतया प्रकाशमानं तद्ब्रह्म सर्वदा जानाति । हरिब्रह्मणोस्तु स्वोपाधिभूताभ्यां रजस्तमोभ्यां सत्त्वस्याभिभूतत्वाद्रुद्रवज्ज्ञानोत्कर्षविरहेण तत्तत्त्वसाक्षात्कारः कादाचित्को यत्नसाध्यश्चेत्यर्थः ॥२—४॥ तस्यापि साधकमिति । एवं रुद्रविष्णवादीनां स्वात्मभू-

त्रिमूर्तीनां तु यज्ज्ञानं ब्रह्मैकविषयं परम् ।
तस्यापि साधकं तत्त्वं साक्षित्वान्नैव गोचरम् ॥ ५ ॥
प्रसादादेव तस्यैव परतत्त्वस्य केवलम् ।
देवादयोऽपि पश्यन्ति तत्रापि ब्रह्म साधकम् ॥ ६ ॥
अतः प्रसादसिद्ध्यर्थं परया श्रद्धया सह ।
ध्येयमेव परं तत्त्वं हृदयाम्भोजमध्यगम् ॥ ७ ॥
त्रिमूर्तीनां तु रुद्रोऽपि शिवं परमकारणम् ।
सदा मूर्त्यात्मना प्रीत्या ध्यायति द्विजपुङ्गवाः ॥ ८ ॥
त्रिमूर्तीनां तु विष्णुश्च शिवं परमकारणम् ।
सदा मूर्त्यात्मना प्रीत्या ध्यायति द्विजपुङ्गवाः ॥ ९ ॥
त्रिमूर्तीनां विरिञ्चोऽपि शिवं परमकारणम् ।
सदा मूर्त्यात्मना प्रीत्या ध्यायति द्विजपुङ्गवाः ॥ १० ॥
ब्रह्मविष्णुमहेशानां त्रिमूर्तीनां विचक्षणाः ।
विभूतिरूपा देवाश्च ध्यायन्ति प्रीतिसंयुताः ॥ ११ ॥
घृतकाठिन्यवन्मूर्तिः सच्चिदानन्दलक्षणा ।
शिवाद्भेदेन नैवास्ति शिव एव हि सा सदा ॥ १२ ॥

---

तत्परशिवस्वरूपविषयं यज्ज्ञानं विचार्यमाणे तस्यापि तत्त्वं न विषयभूतं किंतु साधकं प्रकाशकम् । ब्रह्माकारमनोवृत्तेरपि घटपटादिविषयवृत्त्यन्तरवत्साक्षिभास्यत्वादित्यर्थः ॥५॥ रुद्रादीनामपि तत्साक्षात्कारे परशिवप्रसाद एव कारणमित्याह—प्रसादादेवेति । ब्रह्म साधकमिति । परशिवप्रसादहेतुकं यद्ब्रह्मगोचरं ज्ञानं जन्यते तत्रापि तद्ब्रह्म साधकं न तु तेन विषयतया प्रकाश्यमित्यर्थः ॥ ६ ॥ यतो देवादीनामपि परतत्त्वसाक्षात्कारे परशिवप्रसाद एवासाधारणं निमित्तमतस्तत्सिद्धये तत्परतत्त्वं स्वहृदम्बुजे ध्येयमित्यर्थः ॥ ७ ॥ साम्बमूर्त्यात्मनैव तद्ध्येयमिति विधित्सू रुद्रविष्ण्वादीनां तथाविधं परतत्त्वध्यानं दर्शयति—त्रिमूर्तीनामित्यादिना ॥ ८—११ ॥

ब्रह्मविष्णुमहेशाद्याः शिवध्यानपरा अपि ।
परमात्मविभागस्था न जीवव्यूहसंस्थिताः ॥ १३ ॥
ब्रह्मविष्णुमहेशानामाविर्भावा अपि द्विजाः ।
परमात्मविभागस्था न जीवव्यूहसंस्थिताः ॥ १४ ॥
परतत्त्वं परं ब्रह्म जीवात्मपरमात्मनोः ।
औपाधिकेन भेदेन द्विधाभूतमिव स्थितम् ॥ १५ ॥
पुण्यपापावृता जीवा रागद्वेषमलावृताः ।
जन्मनाशाभिभूताश्च सदा संसारिणोऽवशाः ॥ १६ ॥
ब्रह्मविष्णुमहेशानां तथा तेषां द्विजर्षभाः ।
आविर्भावविशेषाणां पुण्यपापादयो न हि ॥ १७ ॥

---

ननु साम्बमूर्तिरनित्या तद्ध्यानेन कथं परशिवस्वरूपप्राप्तिरित्यत आह— घृतकाठिन्यवदिति । यथा घृतकाठिन्यं घृतातिरिक्तवस्त्वन्तरेणासंस्पृष्टमेव मूर्तिभूतं दृश्यत एवं परशिवमूर्तिरपि मायातत्कार्यासंस्पृष्टा केवलं सच्चिदानन्दैकरसस्वभावा परशिवस्वरूपाद्भेदेन नैवास्ति । शिव एव तथाविधमूर्त्यात्मना भातीत्यर्थः ॥ १२ ॥ परमात्मविभागस्था इति । अविद्योपाधिका जीवा मायोपाधिकस्तु जगत्कर्तेश्वरः । मायासत्त्वादिगुणोपाधिकत्वाद्रुद्रादयोऽपीश्वरभेदा नास्मदादिवज्जीवसंघमध्यपातिन इत्यर्थः ॥ १३ ॥ तथा रुद्रादीनां त्रिमूर्तीनां येऽवतारविशेषास्तेषामप्यपरिलुप्तसार्वज्ञस्वाभाव्यादीश्वरप्रभेदत्वमेवेत्यर्थः ॥ १४ ॥ अहं ब्रह्मेति जीवेश्वरभेदस्य स्वाभाविकत्वमाशङ्क्य निरस्यति—परतत्त्वमिति । यन्मायातीतं परं ब्रह्माद्वितीयं तदेव मायाविद्योपाधिप्रयुक्तभेदेन जीवपरमात्मभावेन द्वेधा भवति न तु वास्तवस्तयोर्भेद इत्यर्थः ॥ १५ ॥ पुण्यपापावृता इति । यतः स्वाश्रयव्यामोहकर्यविद्या जीवोपाधिरतस्तत्कृतपुण्यपापैस्तद्धेतुभूतरागद्वेषादिभिश्च जीवा आवृता भवन्ति । अतस्तत्फलभूतजन्ममरणप्रवाहपतिता अविद्यापरवशाः संसारिणो भवन्तीत्यर्थः ॥ १६ ॥ पुण्यपा-

आज्ञया परतत्त्वस्य जीवानां हितकाम्यया ।
आविर्भावतिरोभावौ तेषां केवलमास्तिकाः ॥ १८ ॥
हरिब्रह्महरास्तेषामाविर्भावाश्च सुव्रताः ।
सदा संसारिभिर्जीवैरुपास्या भुक्तिमुक्तये ॥ १९ ॥
उपास्यत्वे समानेऽपि हरः श्रेष्ठो हरेरजात् ।
न समो न विहीनश्च नास्ति संदेहकारणम् ॥ २० ॥
विहीनं वा समं वाऽपि हरिणा ब्रह्मणा हरम् ।
ये पश्यन्ति सदा ते तु पच्यन्ते नरकानले ॥ २१ ॥
हरिब्रह्मादिदेवेभ्यः श्रेष्ठं पश्यन्ति ये हरम् ।
ते महाघोरसंसारान्मुच्यन्ते नात्र संशयः ॥ २२ ॥
प्राधान्येन परं तत्त्वं मूर्तिद्वारेण योगिभिः ।
ध्येयं मुमुक्षुभिर्नित्यं हृदयाम्भोजमध्यमे ॥ २३ ॥
कार्यभूता हरिब्रह्मप्रमुखाः सर्वदेवताः ।
अप्रधानतया ध्येया न प्रधानतया सदा ॥ २४ ॥
सर्वैश्वर्येण संपन्नः सर्वेशः सर्वकारणम् ।
शंभुरेव सदा साम्बो न विष्णुर्न प्रजापतिः ॥ २५ ॥
तस्मात्तत्कारणं ध्येयं प्राधान्येन मुमुक्षुभिः ।
न कार्यकोटिनिक्षिप्ता ब्रह्मविष्णुमहेश्वराः ॥ २६ ॥

---

पादयो न हीति । विशुद्धसत्त्वप्रधानमायोपाधिकत्वाद्ब्रह्मविष्ण्वादीनां रागद्वेषादिमलानावृतत्वेन पुण्यपापादयो न सन्तीत्यर्थः ॥ १७ ॥ किंनिमित्तस्तेषामवतार इति तदाह—आज्ञयेति ॥ १८ ॥ जीवैरुपास्या इति । स्वाधीनमायोपाधिकत्वेन जीवापेक्षितफलप्रदानसामर्थ्ययोगाद्ब्रह्मविष्ण्वादीनामुपासनीयत्वम् ॥ १९—२२ ॥ परतत्त्वस्य त्रिमूर्तीनां चोपासने विशेषमाह—प्राधान्येनेति । स्वप्राधान्येन ध्येयं परं ब्रह्म । हरिब्रह्मादयस्तूपहितब्रह्मरूपत्वात्सोपाधिकरूपाः । प्राधान्येन निरुपाधिकं

शिवंकरत्वं सर्वेषां देवानां वेदवित्तमाः ।
स्वविभूतिमपेक्ष्यैव न परब्रह्मवत्सदा ॥ २७ ॥
शिवंकरत्वं संपूर्णं शिवस्यैव परात्मनः ।
साम्बमूर्तिधरस्यास्य जगतः कारणस्य हि ॥ २८ ॥
अतोऽपि स शिवो ध्येयः प्राधान्येन शिवंकरः ।
सर्वमन्यत्परित्यज्य दैवतं परमेश्वरात् ॥ २९ ॥
साक्षात्परशिवस्यैव शेषत्वेनाम्बिकापतेः ।
देवताः सकला ध्येया न प्राधान्येन सर्वदा ॥ ३० ॥
शिखाऽप्याथर्वणी साध्वी सर्ववेदोत्तमोत्तमा ।
अस्मिन्नर्थे समाप्ता सा श्रुतयश्चापरा अपि ॥ ३१ ॥
यथा साक्षात्परं ब्रह्म प्रतिष्ठा सकलस्य च ।
तथैवाथर्वणो वेदः प्रतिष्ठैवाखिलश्रुतेः ॥ ३२ ॥
कन्दस्तारस्तथा बिन्दुः शक्तिस्तारो महाद्रुमः ।
स्कन्धशाखा अकाराद्या वर्णा यद्वत्तथैव तु ॥ ३३ ॥

---

ब्रह्माऽऽत्मतयैव ध्येयमित्यर्थः ॥२३—२८॥ यदथर्वशिखायामाम्नायते—'शिव एको ध्येयः शिवंकरः सर्वमन्यत्परित्यज्य' इति तदभिप्रायमाविष्कुर्वन्परशिवस्यैव प्राधान्येन ध्येयत्वं निगमयति—अत इति ॥ २९ ॥ ॥३०॥ यदुक्तपरशिवस्वरूपेऽथर्वशिखैव साक्षात्प्रमाणमित्याह—शिखेति । अथर्वणा दृष्टाऽऽथर्वणी शिखा वेदमूर्धन्यवस्थानाच्छिखा । तादृशी श्रुतिरस्मिन्परशिवस्वरूपे ध्येयत्वेन प्रतिपादने समाप्ता पर्यवसितेत्यर्थः । अपरा अपीति । ऐतरेयकाद्युपनिषदित्यर्थः ॥ ३१ ॥ आथर्वणश्रुतेः प्राधान्यं सदृष्टान्तमुपपादयति—यथेति । यथा परं ब्रह्म स्वातमन्यध्यस्तस्य सकलस्य जगतः प्रतिष्ठाऽऽश्रय एवमाथर्वणी श्रुतिरपि रहस्यार्थप्रतिपादकत्वादखिलश्रुतेराश्रयभूतेत्यर्थः ॥ ३२ ॥ एतदेव सदृष्टान्तमुपपादयति—कन्दस्तार इति । दुःखात्तारयतीति तारः प्रणवः । तथैवाथर्व-

तारस्कन्दः श्रुतेर्जातिः शक्तिराथर्वणो द्रुमः ।
स्कन्धशाखास्त्रयो वेदाः पर्णाः स्मृतिपुराणकाः ॥ ३४ ॥
अङ्गानि शाखावरणं तर्कास्तस्यैव रक्षकाः ।
पुष्पं शिवपरिज्ञानं फलं मुक्तिः परा मता ॥ ३५ ॥
बहुनोक्तेन किं विप्राः शिवो ध्येयः शिवंकरः ।
सर्वमन्यत्परित्यज्य दैवतं भुक्तिमुक्तये ॥ ३६ ॥
सर्वमुक्तं समासेन सारात्सारतरं बुधाः ।
शिवध्यानं सदा यूयं कुरुध्वं यत्नतः सदा ॥ ३७ ॥

इति श्रीसूतसंहितायां यज्ञवैभवखण्डस्योपरिभागे सूतगीतायां सर्वशास्त्रार्थसंग्रहो नाम षष्ठोऽध्यायः ॥ ६ ॥

---

शिखायामाम्नातम् 'सर्वेभ्यो दुःखेभ्य एभ्यः संतारयतीति तारणात्तारः' इति । स चाकारोकारमकारबिन्दुनादशक्तिशान्ताख्यावयवैः सप्तावयवः । स च मूलाधारे परावाग्रूपेण वर्तमानो वक्ष्यमाणस्य वृक्षस्य कन्दो मूलम् । तत्र च बिन्द्वाख्यो योऽवयवः सैव तस्य कन्दस्य शक्तिः सामर्थ्यम् । यश्च वैखरीरूपोऽभिव्यक्तस्तारः प्रणवः स एव महावृक्षः । अकाराद्या ये पञ्चाशद्वर्णास्ते प्रणवावयवेभ्यो जातत्वात्तस्य द्रुमस्य स्कन्धशाखात्मकाः । यद्वद्यं दृष्टान्तः तद्वदेवाखिलश्रुतेः प्रणव एव कन्दः । श्रुतिजातिः शक्तिः प्रणवात्मकस्य तज्जननसामर्थ्यम् । अथर्वणा दृष्टो यो वेदः स एव द्रुमः । ऋग्यजुःसामाख्यास्त्रयो वेदाः स्कन्धशाखाः । तस्य वृक्षस्य स्मृतिपुराणादीनि पर्णानि । कल्पसूत्रादीनि षडङ्गानि शाखावरणं रक्षणाय बहिरावरणम् । तर्कास्तस्यैवाऽऽवरणस्य संरक्षकाः । परशिवस्वरूपं यज्ज्ञानं तदेव तस्य वृक्षस्य पुष्पम् । तत्प्राप्या मुक्तिरेव फलम् ॥ ३३ ॥—३५ ॥ एवमथर्ववेदस्य प्राधान्यात्तदुक्तप्रकारेण शिवस्वरूपमेव ध्येयमिति निगमयति—बहुनोक्तेनेति ॥ ३६ ॥ ३७ ॥

इति श्रीसूतसंहितातात्पर्यदीपिकायां यज्ञवैभवखण्डस्योपरिभागे सूत-

## सप्तमोऽध्यायः ।

### ७. रहस्यविचारः ।

सूत उवाच—

रहस्यं संप्रवक्ष्यामि समासेन न विस्तरात् ।
शृणुत श्रद्धया विप्राः सर्वसिद्ध्यर्थमुत्तमम् ॥ १ ॥
देवताः सर्वदेहेषु स्थिताः सत्यतपोधनाः ।
सर्वेषां कारणं साक्षात्परतत्त्वमपि स्थितम् ॥ २ ॥
पञ्चभूतात्मके देहे स्थूले षाट्कौशिके सदा ।
पृथिव्यादिक्रमेणैव वर्तन्ते पञ्च देवताः ॥ ३ ॥
कार्यं ब्रह्मा महीभागे कार्यं विष्णुर्जलांशके ।
कार्यं रुद्रोऽग्निभागे च वाय्वंशे चेश्वरः परः ।
आकाशांशे शरीरस्य स्थितः साक्षात्सदाशिवः ॥ ४ ॥

---

गीतायां सर्वशास्त्रार्थसंग्रहो नाम षष्ठोऽध्यायः ॥ ६ ॥

इत्थं सम्यग्ज्ञानहेतोः परशिवप्रसादस्य सिद्धये तद्ध्यानं साक्षात्साधनमुपदिष्टम् । स्वशरीरावयवेषु वक्ष्यमाणदेवताध्यानमपि परंपरया तत्साधनमिति वक्तुं प्रतिजानीते- रहस्यमिति ॥१॥ देवताः सर्वदेहेष्विति । सर्वशरीरेषु तत्तद्देहावयवानामिन्द्रियादीनां च नियमनार्थं तत्तदभिमानिन्यो देवताः स्थिताः । सनियन्तृकाणां सर्वेषां शरीरादीनां यत्कारणं परं ब्रह्म तदपि कृत्स्नशरीरेषु व्याप्य वर्तत इत्यर्थः ॥२॥ कुत्र का देवता ध्येयेत्येतद्विभजति-- पञ्चभूतात्मक इत्यादिना । षाट्कौशिक इति । त्वगसृङ्मांसमेदोऽस्थिमज्जेति षाट्कौशिके शरीर इत्यर्थः । तत्र स्थूलशरीरारम्भकाणि यानि पृथिव्यादिपञ्चभूतानि तेषु ब्रह्मविष्णुरुद्रेश्वरसदाशिवाः क्रमेणाधिष्ठाय वर्तन्ते । अतस्ते तत्र ध्येया इत्याह—पृथिव्यादीति ॥ ३ ॥ कार्यं ब्रह्मेति । ब्रह्माविष्णुरुद्रा हि गुणमूर्तित्वात्परब्रह्मणः कार्यभूता अतस्ते त्रयोऽप्यत्र कार्यमिति विशेष्यते । यद्वा पृथिव्यादिभूतेषु तत्तदनुग्रहाय

शरीरस्य बहिर्भागे विराडात्मा स्थितः सदा ॥ ५ ॥
अन्तर्भागे स्वराडात्मा सम्राड्देहस्य मध्यमे ।
ज्ञानेन्द्रियसमाख्येषु श्रोत्रादिषु यथाक्रमात् ॥ ६ ॥
दिग्वाय्वर्कजलाध्यक्षभूमिसंज्ञाश्च देवताः ।
कर्मेन्द्रियसमाख्येषु पादपाण्यादिषु क्रमात् ॥ ७ ॥
त्रिविक्रमेन्द्रवह्न्याख्या देवताश्च प्रजापतिः ।
मित्रसंज्ञश्च वर्तन्ते प्राणे सूत्रात्मसंज्ञितः ॥ ८ ॥
हिरण्यगर्भो भगवानन्तःकरणसंज्ञिते ।
तदवस्थाप्रभेदेषु चन्द्रमा मनसि स्थितः ॥ ९ ॥
बुद्धौ बृहस्पतिर्विप्राः स्थितः कालाग्निरुद्रकः ।
अहंकारे शिवश्चित्ते रोमसु क्षुद्रदेवताः ॥ १० ॥
भूतप्रेतादयः सर्वे देहस्यास्थिषु संस्थिताः ।
पिशाचा राक्षसाः सर्वे स्थिताः स्नायुषु सर्वशः ॥ ११ ॥
मज्जाख्ये पितृगन्धर्वास्त्वङ्मांसरुधिरेषु च ।
वर्तन्ते तत्र संसिद्धा देवताः सकला द्विजाः ॥ १२ ॥

---

ब्रह्मादीनां योंऽशो निहितस्तदभिप्रायमिदं कार्यमिति विशेषणम् ॥ ४ ॥ शरीरस्य बहिर्भाग इति । स्थूलशरीरस्य बहिर्भागे स्थूलशरीराभिमानी विराडात्मा स्थितः । अन्तर्भागे तु सूक्ष्मशरीराभिमानी स्वराडात्मा । देहद्वयस्य कारणशरीराभिमानी सम्राडात्माऽवस्थितो ध्येय इत्यर्थः । ज्ञानेन्द्रियसमाख्येष्वित्यादिना दिग्वाय्वादिदेवतानां समष्टिश्रोत्रादिषु जातत्वात्तस्य व्यष्टीनां तेषां नियमनकारित्वस्य च प्राक्प्रतिपादितत्वात्तत्र तत्र श्रोत्रादौ दिग्वाय्वादिदेवताः क्रमेण ध्यातव्या इत्यर्थः । उक्तं हि चतुर्थे—'दिग्वाय्वर्कजलाध्यक्षपृथिव्याख्यास्तु देवताः । जायन्ते क्रमशः श्रोत्रप्रमुखेषु समष्टिषु' इत्यादिना ॥ ५—८ ॥ अन्तःकरणसंज्ञित इति । अन्तःकरणाख्येऽवयवे तत्समष्टौ जातत्वाद्धिरण्यगर्भोऽवतिष्ठते ।

